# पुष्पवाण-विलास-काव्यम्।

## महाकवि-कालिदास-विरचितम्।

—००—

व्याख्यान-सहितम्।

—०००००—

बि, ए, उपाधि-धारिणा

श्रीजीवानन्द-विद्यासागर-भट्टाचार्य्येण

संस्कृतम्।

---

कलिकाता नगरे

काव्यप्रकाश-यन्त्रे मुद्रितम्।

इं १८७४

# पुष्पबाणविलासः ।

श्रीमद्गोपवधूस्वयंग्रहपरिष्वङ्गेषु तुङ्गस्तन-
व्यामर्दाद्गलितेऽपि चन्दनरजस्यङ्गे वहन् सौरभम् ।
कश्चिज्जागरजातरागनयनद्वन्द्वः प्रभाते श्रियं
बिभ्रत्कामपि वेणुनादरसिको जाराग्रणीः पातु वः ॥ १ ॥

अथ कविः गोपिकावल्लभचरित्र प्रतिपादन पवित्रितं पुष्पबाणविलासाख्यं शृङ्गारकाव्यं चिकीर्षुः आदौ मङ्गलत्वादाशिषं प्रयुङ्क्ते । श्रीमदिति । अत्र प्रथमं भूदेवताकस्य मगणस्य प्रयोगात् कर्तृश्रोतॄणांशुभं भवति ।

श्रीःशोभा । श्रीर्वेषरचना शोभा सम्पत्तरलशाखिषु इति रत्नमाला । श्रीमत्यः शोभावत्यः याः गोपवध्वः तासां ये स्वयंग्रहपरिष्वङ्गाः स्वयंग्रहः स्वयमेव ग्रहणं तत्प्रधानाः परिष्वङ्गाः आलिङ्गनानि मध्यमपदलोपी समासः । स्वयंग्रहेण परिष्वङ्गा इति तृतीयासमासो वा । तेषु गोपवधूनां शोभाशालित्वोत्घाटनपूर्वकं स्वयंग्रहालिङ्गनानां प्रतिपादनात् भगवतः श्रीकृष्णस्य लोकोत्तरसौन्दर्यं तत्प्रयुक्तस्तासां तस्मिन्ननुरागातिशयश्च व्यज्यते । तुङ्गस्तनानां यो व्यामर्दः परिपीडनं तस्मात्

कर्म्मणि षष्ठ्याःसमासः। यद्वा तुङ्गस्तनैर्व्यामर्दः परिपीडन-मिति करणे तृतीया। कर्त्तृकरणे कृता बहुलमिति समासः। चन्दनरजसि मलयजपरागे गलितेऽपि। सर्वाङ्गगते चन्दने गोपाङ्गनाकठिनकुचमथितत्वेन चूर्णतां प्राप्य परिभ्रष्टे सत्यपि अङ्गे शरीरे। अङ्गं गात्रान्तिकोपायप्रतीकेष्वप्रधानक इति नामार्थरत्नमाला। सौरभं चन्दनस्यैव परिमलं वहन् दधानः जागरेण निरन्तरक्रीड़ालम्पटत्वात् निद्रारहितत्वेन जातरागं उत्पन्नरक्तिमगुणं यस्य स तथोक्तः। रागोऽनुरागे मात्सर्य्ये लाक्षादौ रक्तिमविषोः इति विश्वः। तथा प्रभाते प्रातःकाले कामपि अनिर्वाच्यां श्रियं सम्भोगचिह्नजनितां लक्ष्मीं बिभ्रत् धारयन्। नाभ्यस्ताच्छतुरिति नुमभावः। वेणुनादे रसिको रागवान् रसोऽस्यास्तीति रसिकः। अत इनि ठनाविति ठन्-प्रत्ययः। शृङ्गारादौ जले वीर्य्ये गुणे रागे द्रवे रसः इत्यमरः। कश्चिज्जाराग्रणीः गोपिकाजारनायकः भगवान् वासुदेव इति यावत्। तस्य वाचकपदेन अनुपात्तत्वेऽपि विशेषणैः स्फुटी-कृतत्वात्। वो युष्मान् पातु। अत्राधारस्य चन्दनस्यापगमेऽपि आधेयस्य सौरभगुणस्य स्थितेर्वर्णनात् विशेषालङ्कारः तदुक्तं विशेषः ख्यातमाधारं विनाप्याधेयवर्णन मिति। तथाकृतवधू-पभोगस्याकृतेर्यथावद्वस्तुवर्णनेन स्वभावोक्तिश्च। स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनमिति। अनयोः पूर्वोक्तविशेषाङ्गत्वमित्यन-योःसङ्करः। तथास्य साधारणरूपेण वक्तव्यस्य श्रीकृष्णस्य जारा-ग्रणीत्व--रूपेणानुवर्णनमिति भङ्ग्यन्तराश्रयणरूपः पर्यायोक्तालङ्कारः। पर्यायोक्तं तु गम्यस्य वचो भङ्ग्यन्तराश्रयमिति लक्षणात्।

तथा सम्भोगशृङ्गारस्य कवीष्टदेवताविषयरतिभावं प्रत्यङ्गत्वाद्रसवदलङ्कारः । लिङ्गभावं रसो यत्र भावं प्रत्यथ वा रसम् । भजेत्स तत्र रसवदलङ्कार उदीरितः इति लक्षणात् । तथा देवविषयरतिभावस्यापि कवीष्टस्यैव अनुग्राह्यजनविषयरतिभावं प्रत्यङ्गत्वात् प्रेयोऽलङ्कारः । प्रेयोऽलङ्कृतिरङ्गं चेद्भावो भावान्तरं प्रति इति लक्षणात् । भावलक्षणं तु काव्यप्रकाशे । रतिर्देवादिविषया व्यभिचारी तथाञ्जितः । भावः प्रोक्तस्तथा भासा अनौचित्यप्रवर्त्तिताः ॥ इति लक्षणात् । अञ्जितो व्यञ्जित एव । एते पञ्च अर्थालङ्काराः शब्दालङ्कारस्तु । स्वयंग्रहपरिष्वङ्गेषु तुङ्गस्तनेत्यादौ वृत्त्यनुप्रासःस्फुट एव । तल्लक्षणं तु एकद्विप्रभृतीनां तु व्यञ्जनानां यथा भवेत् । पुनरुक्तिरसौ नाम वृत्त्यनुप्रास इष्यते । पर्यायोक्त्यादीनां चतुर्णां प्रागुक्तयोर्द्वयोश्च अन्योन्यनैरपेक्ष्यात् संसृष्टिः । शार्दूलविक्रीड़ितवृत्तम् । सूर्य्याश्वैर्मसजास्तताःसगुरवश्शार्दूलविक्रीड़ितमिति लक्षणात् ॥ १ ॥

भुवनविदितमासीद्यच्चरित्रं विचित्रं
सहयुवतिसहस्रैः क्रीड़तो नन्दसूनोः ।
तदखिलमवलम्ब्य स्वादु शृङ्गारकाव्यं
रचयितुमनसो मे शारदास्तु प्रसन्ना ॥ २ ॥

सम्प्रति कविः स्वचिकीर्षितं प्रतिजानन् तन्निर्वाहाय सरस्वतीप्रसादमाशास्ते । भुवनेति । युवतिसहस्रैः सह क्रीड़तो नन्दसूनोः श्रीकृष्णस्य सम्बन्धि विचित्रं अद्भुतं यच्चरित्रं गोपकन्याप्रलोभनादिरूपं भुवनविदितं लोकैर्विज्ञातमासीत् ।

अखिलं तच्चरित्रमवलम्ब्य प्रतिपाद्यत्वेन आश्रित्य स्वादु मधुरं स्वाद्यमिति यावत् । शृङ्गारकाव्यं शृङ्गाररसप्रधानं काव्यं रचयितुं कर्तुं मनो यस्य तस्य मे मम शारदा सरस्वती प्रसन्ना अस्तु सरसकाव्यरचनानुकूलवाग्विजृम्भणं घटयत्वित्याशयः । मालिनीवृत्तम् । ननमयययुतेयं मालिनी भोगलोकैः इति लक्षणात् ॥ २ ॥

कान्ते दृष्टिपथङ्गते नयनयोरासीद्विकासो महान्
प्राप्ते निर्जनमालयं पुलकिता जाता तनुः सुभ्रुवः ।
वक्षोजग्रहणोत्सुके समभवत्सर्वाङ्गकम्पोदयः
कण्ठालिङ्गनतत्परे विगलिता नीवी दृढ़ापि स्वयम् ॥ ३ ॥

परस्पररूपरेखाविलासादिभिर्जातानुरागयोरयोगवशादुत्कण्ठितयोः क्वचिद्रहसि दैववशान्मिलितयोः कामिनीचेष्टां कविराह । कान्त इति । कान्ते सुभ्रुवः इति पदद्वयं प्रतिवाक्यं सम्बध्यते कान्ते वल्लभे दृश्योः नयनयोः पन्थाः दृष्टिपथः ऋक्पूरित्यादिना समासान्तः । दृष्टिर्धीर्दर्शनाक्षिषु इति नानार्थः । तं गते प्राप्ते दृग्गोचरे सतीत्यर्थः सुभ्रुवः सुन्दर्याः नयनयोर्महान् विकास आसीत् साभिलाषतया नेत्रे विसार्य्य निर्निमेषमद्राक्षीदित्यर्थः । ततः कामिनीनयनविभ्रमाकृष्टे तस्मिन् कान्ते निर्जनं दैववशात्तत् काले जनवर्जितं आलयं गृहं प्राप्ते सति सुभ्रुवः तनुः पुलकिता संजातपुलका तदस्य संजातं तारकादिभ्य इतजिति इतच्प्रत्ययः । जाता अभूत् उत्पन्न-

भूतयोर्जातः द्वन्द्वजात्योस्तु न द्वयोः इति रत्नमाला । एकान्तस-
मागमेन मनोविकासस्य उपचये सति रोमोद्गमः प्रादुरभूदि-
त्यर्थः । ततो विजनगृहावस्थितकामिनीसमीपवर्त्तनसमुल्ल-
सितचापले तस्मिन् कान्ते वक्षोजयोः स्तनयोः ग्रहणे उत्सुके
सति ग्रहणमनाख्याय औत्सुक्यमात्रोक्त्या तस्य कान्तस्य सभय-
प्रवृत्तिः सूच्यते सुभ्रुवः सर्व्वाङ्गकम्पोदयः समभवत् सम्भवति स्म
रागान्महावेपथुरुत्पन्न इत्यर्थः । तथा च लक्षणं रागद्वेषभया-
दिभ्यो वेपथुर्गात्रवेपनमिति । ततस्तस्यां कुचग्रहणमङ्गीकुर्वा-
णायां निवर्त्तमानसाध्वसे तस्मिन् कान्ते कण्ठालिङ्गनतत्परे
सति दृढ़ापि नीवी वस्त्रग्रन्थिः । नीवी परिपणे ग्रन्थौ
स्त्रीणां जघनवाससि इत्यमरः । स्वयमेव विगलिता विस्रस्ता ।
अत्र प्रथमे वाक्ये आदरादृर्शन चक्षुःप्रीतिरित्यभिधीयते इति
लक्षणात् । प्रथमानङ्गदशा दर्शिता द्वितीयतृतीययोः सात्त्विक-
प्रादुर्भावो वर्णितः तुरीये तु कामेङ्गितं कथितम् । तल्लक्षणं तु
रतिरहस्ये । ओष्ठः प्रस्फुरतीक्षणे विचलतः कूपोदरे मत्स्यवत् ।
धम्मिल्लः कुसुमाञ्चितो विगलति प्राप्तोऽपि बन्धं पुनः । प्रच्छन्नौ
व्रजतःस्तनौ प्रकटतां श्रोणीतटं दृश्यते नीवी च स्खलति स्थितापि
सुदृढ़ं कामेङ्गितं योषिताम् । इति दर्शनस्पर्शनादिवर्णनात्
सम्भोगशृङ्गारः । अनुकूलौ निषेवेते यत्रान्योन्यं विलासिनौ ।
दर्शनस्पर्शनादीनि सम्भोगोऽयमुदाहृतः इति । स्वभावोक्तिर-
लङ्कारः ॥ ३ ॥

मां दूरादरविन्दसुन्दरदरस्मेरानना सम्प्रति
द्रागुत्तुङ्गघनस्तनाङ्गणगलद्व्याकृत्तरीयाञ्चला ।

प्रत्यासन्नजनप्रतारणपरा पाणिं प्रसार्य्यान्तिके
नेत्रान्तस्य चिरं कुरङ्गनयना साकूतमालोकते ॥ ४ ॥

कस्याश्चित्कामिन्या चेष्टां पश्यन् कामी नर्मसचिवं ब्रूते मामिति। सम्प्रति अधुना अरविन्दमिव सुन्दरं दरस्मेरं मन्दं यथा तथा स्मयमानं आननं मुखं यस्याः सा तथोक्ता। त्रिपदोऽयम्बहुव्रीहिः दरस्मेरेत्यत्र सुप्सुपेति समासः। स्मयतेर्नमिकम्पीत्यादिना रप्रत्ययः। दरन्त्वव्ययमल्पार्थे इति रत्नमाला। द्राक् शीघ्रं उत्तुङ्गौ समुन्नतौ घनौ पृथुलौ कठिनौ वा यौ स्तनौ तयोरङ्गणात् प्रान्तात् गलत् चारूत्तरीयस्य अञ्चलं अन्तो यस्याः सा तथोक्ता। इति कामिङ्गितोक्तिः। कठिनाधिकसान्द्रेषु इत्यादिना त्रिषु क्लीवे पुमान् घनः इति रत्नमाला। अञ्चलन्त्वंशुकान्ते स्यादित्यमरः। कुरङ्गनयना मृगाक्षी प्रत्यासन्नाः समीपस्थाः ये जनाः तेषां प्रतारणं वञ्चनं परं प्रधानं यस्याः सा तथोक्ता। परेङ्गितग्राहिणः पार्श्ववर्त्तिनो धूर्त्तानात्मीयनयनदर्शनविभ्रमदर्शनपरिहारेण वञ्चयितुकामा सतीत्यर्थः। नेत्रान्तस्य अपाङ्गस्य अन्तिके समीपे पाणिं प्रसार्य्य अङ्गुष्ठस्य अधोभागवर्त्तित्वेन संश्लिष्टानां इतराङ्गुलीनां ऊर्द्ध्वत्वेन श्रोत्रनेत्रमध्यवर्त्तित्वं यथा स्यात्तथा कपोले हस्तं सन्निवेश्येत्यर्थः। मां दूरात् आकूतेन भावेन सहितं यथा तथा साकूतं चिरं भावग्रहणपर्य्यन्तम् आलोकते पश्यति दृग्विलासैराशयं प्रकटयन्ती वर्त्तत इत्यर्थः। अत्र निजमर्मगुप्तये नेत्रान्तिकपाणिप्रसारणक्रियया द्रष्टृजनवञ्चनस्योक्तेर्युक्तिर्नामालङ्कारः। युक्तिः पराभिसन्धानं क्रियया मर्मगुप्तये इति लक्ष-

णात्। स्वभावोक्त्यनुप्रासौ स्फुटावेव बन्धस्यात्युज्ज्वलतया कान्तिर्नाम गुणः। अत्युज्ज्वलत्वम्बन्धस्य काव्ये कान्तिरितीर्यते। इति लक्षणात्। अत्र नायिका प्रौढा स्मरमन्दीकृतव्रीडा प्रौढा संपूर्णयौवनेति लक्षणात्॥ ४॥

नीरन्ध्रमेतदवलोकय माधवीनां
मध्ये निकुञ्जसदनञ्च्युतपुष्पकीर्णम्।
कुर्युर्यदीह मणितानि विलासवल्यो-
र्बोद्धुं न शक्यमबले! निनदैः पिकानाम्॥ ५॥

कामी सङ्केतवशात् कुसुमापचयादिव्याजेन प्रविष्टां कामिनीं प्रति गूढविहारयोग्यस्थानं प्रदर्शयन्नाह नीरन्ध्रमिति। हे अबले! माधवीनां मध्ये नीरन्ध्रं बहिःसर्वत्र लतादिव्याप्तया छिद्र-रहितं परैरनालक्ष्यत्वेन वस्तुं योग्यमिति भावः। च्युतैः पुष्पैः कीर्णं संच्छन्नं अदलपुष्पशय्यान्वितमिति भावः। एतत्पुरोवर्ति निकुञ्जमेव सदनं गृहं अवलोकय पश्य। न केवलम् अत्र कामिनीजनो निःशब्दमवस्थित एव ज्ञातुमशक्यः किन्तु शब्दा-यमानोऽपीत्याशयेनाह। इह अस्मिन्निकुञ्जसदने विलासवल्यो विलासिन्यो मणितानि रतिकूजितानि कुर्युर्यदि पिकानां कोकि-लानां निनदैः कूजितैः हेतुभिः बोद्धुं ज्ञातुमशक्यम्। वनमध्ये कोकिलकूजितैःसह श्रूयमाणान् तदनुकारिणो मणितविशे-षान् विविच्य गृहीतुं न केनापि शक्यत इत्यर्थः। मणितविशे-षाणां कोकिलकूजितानुकारित्वं कामशास्त्रे प्रसिद्धम्। अत्र मणितानां कोकिलकूजितानां च साम्येन भेदानुपलब्धिप्रति-

पादनात् सामान्यालङ्कारः । सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकता इति लक्षणात् । तेन कोकिलालापमुखरितेऽस्मिन् वनप्रदेशे साम्यबलान्मणितेषु कोकिलकूजित भ्रमस्य अवश्यमुत्पद्यमानतया मणितान्याकर्ण्यापि कामिनोः क्रीड़ां ज्ञातुं कोऽपि न शक्नुयादिति भ्रान्तिमदलङ्कारोऽपि प्रतीयत इति अलङ्कारेणालङ्कारध्वनिः । तथा इदमेवावयोर्विहारयोग्यं गूढस्थानम् । इहैव रन्तुं प्रसीदेत्यपि व्यज्यत इति वस्तुध्वनिश्च । वसन्ततिलकावृत्तम् । उक्ता वसन्ततिलका तभजाजगौग इति लक्षणात् ॥५॥

> दष्टं विम्बधियाधराग्रमरुणं पर्य्याकुली धावनात्
> धम्मिल्लस्तिलकं श्रमाम्बुगलितं छिन्ना तनुः कण्टकैः ।
> आः ! कर्णज्वरकारि कङ्कणझणत्कारं करौ धून्वती
> किं भ्राम्यस्यटवीशुकाय कुसुमान्येषा ननान्दाग्रहीत् ॥६ ॥

सहचरीभिः साकं कुसुमापचयाय वनं प्राप्तां पुष्पितलतापादपान्वेषणव्याजेन अखिलाःस्त्रियः प्रतार्य्य कश्चिद्विजनं गूढ़प्रदेशं नीत्वा जारेण सङ्गमितां काञ्चित्कामिनीं तत्परित्राणाय बहिरवस्थिता दूतिका दैववशात्तमेव प्रदेशं कुसुमलिप्सया प्राप्तायाः तत्पतिस्वसुरागमनं सूचयन्ती शङ्कादर्शनात्प्रागेव हेत्वन्तरोपन्यासेन सम्भोगलिङ्गानि छादयन्ती प्राह। दष्टमिति। अरुणं स्वभावतो रक्तम्। इति विम्बभ्रान्तिहेतूक्तिः। अधराग्रं बिम्बधिया बिम्बफलमिति बुद्ध्या दष्टं शुकेन चञ्चुपुटेन विद्धमिति दन्तक्षतापलापः । धम्मिल्लः बद्धकचसमूहः धम्मिल्लः संयताः कचाः इत्यमरः । धावनाच्छीघ्रगमनात् पर्य्याकुलः विश्लिष्ट

व्याकुलो जात इति शेषः। तिलकं श्रमाम्बुगलितं स्वेदजलेन च्युतं जातमिति शेषः। तनुः शरीरं कण्टकैश्छिन्ना शुकलोभात् दुष्प्रवेशकण्टकितलतामध्यप्रदेशेषु प्रवेशेन स्तनादिस्थानेषु कण्टकिता जातेति नखक्षतापलापः कृतः। आः इति कोपे। आस्तु स्यात्कोपपीडयोरिति विश्वः। अत्र परप्रतारणायाभिनीयमानत्वान्मृषाभूताः कर्णज्वरकारिणः अतिमात्रश्रोत्रपीडाकराः कङ्कणझणत्कारा यस्मिन् कर्म्मणि तद्यथा भवति तथा करौ धून्वती प्रकम्पयन्ती पश्चात् पुरश्च व्यापारयन्ती सतीत्यर्थः। अटवीशुकाय अरण्यकीराय अटवीग्रहणं दुर्ग्रहत्वबोधनार्थं किं भ्राम्यसि किन्निमित्तं इतस्ततो धावसि। तद्ग्रहणस्य दुष्करत्वाद्विफलस्ते प्रयास इति भावः। न केवलमेतत्प्रयास-वैफल्यमात्रं किन्तु प्रागेव त्वया मदीयान्येतानि नान्यैरपचेयानीति स्वाधीनतां नीतान्यपि पुष्पाणि व्यपगतानीत्याह एषेति। एषा पुरोवर्त्तिनी अतिसमीपवर्त्तित्व—सूचनार्थम् एतच्छब्दप्रयोगः। ननान्दा तव पत्युः स्वसा ननान्दा तु स्वसा पत्युः इत्यमरः। कुसुमान्यग्रहीत्। कर्त्तव्यं पुष्पापचयम् अपहाय मोहात्वन्यशुकग्रहणाय वने धावन्त्यास्तव न केवलं शुकालाभः किन्त्वधरव्रणादिरूपानर्थप्रतिलाभोऽपि जात इति प्रकरणानभिज्ञतद्भर्त्तृभगिनीग्राह्यो बाह्याभिप्रायः। ननान्दा समीपं प्राप्ता त्वदीयकङ्कणध्वनिश्च सर्वत्र श्रूयते किमेतदिति जिज्ञासमाना सा समागत्य पश्येत् ततः त्वरितं जारं हित्वा शुकपलायनं कथयन्ती लतागृहमध्यान्निर्य्याहीति प्रकृतस्वैरिणीमात्रग्राह्यो गूढाभिप्रायः। अत्र अधरे बिम्ब-भ्रान्तिवर्णनात् भ्रान्तिमदलङ्कारः। कवि-

सम्मतसादृश्यात् विषये पिहितात्मनि। आरोप्यमाणानुभवो यत्र स भ्रान्तिमान्मतः इति ॥ इष्टानवाप्तिपूर्वकानिष्ट प्राप्ति वर्णनाद्विषमालङ्कारः। विरुद्धकार्य्यस्योत्पत्तिर्यत्रानर्थस्य वा भवेत्। विरूपघटना चासौ विषमालङ्कृतिस्त्रिधा॥ अन्यहेतूक्त्या आकारगोपनाद्व्याजोक्तिः। व्याजोक्तिरन्यहेतूक्त्या यदाकारस्य गोपनं इति। द्वावेतौ प्रतीयमानतया ध्वनिरूपाविति संक्षेपः। दूतिकात्र यथोक्तलक्षणलक्षिता यथाह भरतः। प्रोत्साहनेषु कुशला मधुरकथा दक्षिणा च कालज्ञा। अटहा संवृतमन्त्रा दूतीत्थं तैर्गुणैर्युक्ता इति अटहा चतुरा॥ ६ ॥

बिभ्राणा करपल्लवेन कबरीमेकेन पर्याकुला-
मन्येन स्तनमण्डले निदधती स्रस्तन्दुकूलाञ्चलम् ।
एषा चन्दनलेशलाञ्छिततनुस्ताम्बूलरक्ताधरा
निर्याति प्रियमन्दिराद्रतिपतेः साक्षाज्जयश्रीरिव ॥ ७ ॥

प्रियेन साकं विहृत्य केलीगृहान्निर्गच्छन्तीं विलासिनीं प्रदर्शयन् रसिकः कश्चित्कञ्चिदाह। बिभ्राणेति। पर्य्याकुलां रतिकामोपमर्दनशिथिलबन्धनत्वाद्विस्रंसमानां कबरीं केशपाशम् एकेन करपल्लवेन करः पल्लव इवेत्युपमितसमासः। तेन बिभ्राणा निःशेषच्युतिपरिहाराय दृढमवलम्बमाना तथा स्रस्तं उत्थानसमये स्तनटात्स्खलितं दुकूलं क्षौमाम्बरं सूक्ष्मांशुकं वा तस्याञ्चलं अन्तम्। दुकूलं तु क्षौमे सूक्ष्मांशुके तथेति रत्नमाला। अन्येन करपल्लवेन स्तनमण्डले स्तनबिम्बे वक्षःस्तनप्रदेशे इति यावत्। निदधती प्रसारयन्ती चन्दनस्य

च्यु तशेषस्य मलयजपङ्कस्य लेशैः लाञ्छिता तनुः शरीरं यस्याः सा तथोक्ता आलिङ्गनादिभिरुपक्षीणसर्वाङ्गरागेत्यर्थः। ताम्बूलरक्ताधरा वीटिकारुणोष्ठी एषा पुरोवर्त्तिनी नायिका प्रियमन्दिरात् वल्लभगृहात् साक्षात् प्रत्यक्षभूता। तुल्यप्रत्यक्षयोः साक्षात् इति रत्नमाला। रतिपतेर्मन्मथस्य जयश्रीः जयलक्ष्मीरिव निर्य्याति निर्गच्छति। नायिकाया मन्मथजयलक्ष्मीत्वोत्प्रेक्षणेन मन्मथस्य कृतकृत्यत्वम्। तेन रतोत्सवस्य सकलकामोपचारसम्पन्नत्वं च व्यज्यते। अत्रोपमोत्प्रेक्षा स्वभावोक्तिश्चेति त्रयोऽलङ्काराः। करपल्लवेनेत्यत्र उपमा सा च धर्म्मवाचकयोरनुपादानाल्लुप्ता। वर्ण्योपमानधर्म्माणाम् उपमा वाचकस्य च। एकद्वित्र्यनुपादाद्भिन्नाल्लुप्तोपमाष्टधा। इति लक्षणात्। नायिकायां प्रत्यक्षजयलक्ष्मीत्वसम्भावनायाः क्रियमाणत्वादुत्प्रेक्षा सम्भावना स्यादुत्प्रेक्षा वस्तुहेतुफलात्मना इति लक्षणात्। स्वभावोक्तिः स्फुटैव सा चोत्प्रेक्षानिमित्तभूतसम्भोगलिङ्गजनितशोभातिशयशालित्वप्रख्यापनात्मकत्वात् उत्प्रेक्षालङ्कारस्य अङ्गमिति द्वयोः सङ्करः। उपमाया स्तयोश्च नैरपेक्ष्यात् संसृष्टिः॥७॥

कान्तो यास्यति दूरदेशमिति मे चिन्ता परं जायते
लोकानन्दकरो हि चन्द्रवदने! वैरायते चन्द्रमाः।
किञ्चायं वितनोति कोकिलकलालापो विलापोदयं
प्राणानेव हरन्ति हन्त! नितरामाराममन्दानिलाः॥ ८॥

पत्यौ देशप्रयाणसन्नद्धे सति खेदाकुला नायिका सखीमाह। कान्त इति। कान्तः प्रियः दूरदेशं यास्यति गमिष्य-

तीति हेतोः। इति हेतुप्रकरणप्रकारादिसमाप्तिषु इत्यमरः। मे मम चिन्ता विचारः परं अतिशयितं यथा तथा जायते महान् विचारो भवतीत्यर्थः। हे चन्द्रवदने! चन्द्रमाः लोकस्य जगतः जगति प्राणिजातस्येति यावत्। यद्वा लोकाः जनाः तेषामानन्दकरोऽपि। लोकस्तु भुवने जने इत्यमरः। वैरायते वैरङ्करोति आनन्दकरत्वं विहाय दुःखकरो भवतीत्यर्थः। शब्दवैरकलहाभ्रेत्यादिना वैरशब्दात् क्यङितङ्। किञ्च अयं श्रूयमाणः कोकिलानां कलालापः अव्यक्तमधुरकूजितं कलमव्यक्तमधुरध्वनौ स्याद्वार्च्चलिङ्गकम् इति रत्नमाला। विलापः दुःखेन प्रयुक्तविविधोक्तिः। विलापः परिदेवनम् इत्यमरः। तस्योदयं वितनोति। कोकिलकलालापश्रवणेन मम विलापः प्रादुर्भवतीत्यर्थः। आराममन्दानिलाः उपवनमन्दमारुताः नितरां भृशं प्राणानेव हरन्ति। न केवलं चन्द्रादिवत् आर्त्तिमात्रं कुर्वन्तीत्येवकारार्थः। हन्तेति विषादे। हन्त हर्षे विषादे च इति रत्नमाला। अत्र प्रियप्रवासरूपहेतुप्रसक्तिमात्रेण चिन्तादि कार्य्योदयवर्णनादतिशयोक्तिभेदः। चपलातिशयोक्तिः स्यात्कार्य्ये हेतुप्रसक्तिजे इति लक्षणात्। लोकानन्दकरोऽपि वैरङ्करोतीति द्रव्यक्रिययोर्विरोधस्य अपरिहार प्रदर्शनाद्विरोधालङ्कारः। अत्र चिन्तादि प्रतिपादनाद्विप्रलम्भ शृङ्गारः तदुक्तं शृङ्गारतिलकं सम्भोगो विप्रलम्भश्च द्विधा शृङ्गार। इष्यते संयुक्तयोस्तु सम्भोग विप्रलम्भो वियुक्तयोः। तत्र विप्रलम्भः पञ्चविधः। तथा चाहुः। अयोगोविरहो मानः प्रवासः शाप इत्यपि। विप्रलम्भस्य तस्यैते हेतव परिकीर्त्तिताः। अयन्तु प्रवासविप्रलम्भ शृङ्गारः। देशान्तरं

स्थिति र्या तु प्रवासः स प्रकीर्तितः। कार्श्यपाण्डिमनिश्वास चिन्ता-
दैन्याश्रु गद्गदाः। लम्बालकत्वमित्याद्या अनुभावाः प्रकीर्तिताः ।
प्रवासश्च त्रिविधः । भावी। भवन्। भूतश्च। प्रवासोऽत्र भावी
प्रवासस्य निश्चितत्वेन भर्तुः प्रोषितकल्पत्वादष्टविधनायिकानां
मध्ये परिगणिता प्रोषितभर्तृका नाम नायिका । देशान्तरगते
कान्ते देहसंस्कारवर्जिता। चिन्तादैन्याश्रुकार्श्याद्यैः युक्ता प्रोषित
भर्तृकेति । शृङ्गारनायिकानामष्टविधत्वं आलङ्कारिकैः प्रति-
पादितम्। एताः पुनरवस्थाभि रष्टधास्युर्यथोचितम् । स्वाधीन
पतिका चापि तथा वासकसज्जिका, विरहोत्कण्ठिता विप्रलब्धा
प्रोषितभर्तृका । कलहान्तरिता चाभिसारिका चैव खण्डिता
इति। मतान्तरे तु एषा भर्तुः प्रवासनिश्चयमात्रेण खेदाकुलत्वात्प्र
वत्स्यत्-पतिका नाम नवमी नायिका। तथा चोक्तं रसमञ्जर्याम् ।
यस्याः पतिरग्रिमक्षणे देशान्तरं यास्यत्येव सा प्रवत्स्यत्पतिका।
अस्याश्चेष्टाः काकुवचनकातरप्रेक्षण गमनविघ्नोपदर्शन निर्वेदस
न्तापसंमोह निश्वासबाष्पोदयाः इति। अस्याः स्वाधीनपतिका-
दिष्वष्टस्व न्तर्भावस्तत्रैव परास्तः। अग्रिमक्षणे निश्चितदेशान्तर-
गमने प्रेयसि प्रवत्स्यत्पतिकापि नवमी नायिका भवितुमर्हति ।
अस्याः प्रोषितभर्तृकायां विप्रलब्धायाञ्च नान्तर्भावः भर्तृसन्निकृष्ट-
त्वात्। न च कलहान्तरितायाम्। कलहाभावात् अनवमानितप-
तित्वाच्च। नापि खण्डितायाम् । प्रियस्यान्योपभोगचिह्नितस्या-
नागमनात्। प्रियायाः कोपदर्शनाभावाच्च नापि विरहोत्कण्ठि-
तायां भर्तृसन्निधिवर्त्तित्वाच्च। नापि वासक सज्जिकायाम् ।
वासक नियमाभावात्। सज्जीकरणाभावाच्च । निर्वेददर्शनाच्च ।
नापि स्वाधीनपतिकायाम् । अग्रिमक्षणे सङ्गविच्छेददर्शनाच्च।

व्रजन्नपि पतिः स्वाधीनपतिकया निरुध्यते। अन्यथा भर्तुः स्वाधीनत्वमेव भज्यते। नाप्यभिसारिकायाम् अभिसरणोल्लेखाभावात्। सन्तापदर्शनाच्चेति युक्तमुत्पश्याम इति ॥ ८ ॥

नवकिसलयतल्पं कल्पितं तापशान्त्यै-
कर सरसिजसङ्गात् केवलं म्लापयन्त्याः
कुसुमशरकृशानु प्रापिताङ्गारतायाः।
शिव शिव परितापं को वदेत्कोमलाङ्ग्याः ॥ ९ ॥

विरहिणी-दुर्दशादर्शन-जनित-खेदतः सखी काचिदाह नवेति। तापशान्त्यै देहतापनिवृत्त्यै कल्पितं रचितं नवकिसलयानां बालपल्लवानान्तल्पं तन्मयीं शय्याम्। तल्पं शय्याट्टदारेषु इत्यमरः। कर सरसिज सङ्गात् केवलं पाणिपद्मयोगादेव म्लापयन्त्याः म्लानङ्कुर्वन्त्याः कुसुमशरो मन्मथः सएव कृशानुरग्निः तेन प्रापिता अङ्गारता यस्याः सा स्मरज्वर-तप्ताया इत्यर्थः। कोमलाङ्ग्याः परितापं को वदेत्। को नाम जनो वक्तुं शक्नुयात्। न कोऽपी त्यर्थः। शक्नोति शक्यर्थे लिङ्। शिव शिवेत्युक्तिः खेदातिशयात्। कुर्वन्ति हि शिवनामकीर्तनं भयशोकादिषु तथा पाद्मवचनम्। आश्चर्येऽपि भये शोके क्षुधिते नाम वा मम। व्याजेन वा स्मरेद्यस्तु मम सायुज्य माप्नुयात् इति। तथा प्रयुञ्जते कवयः शिलाकम्प भक्ते शिव शिव वियुङ्क्ते कठिनता मह्यो नारीच्छायामवति वनितारूपमयते। इत्याश्चर्ये प्रयोगः। गणयति करुणापराङ्मुखोऽसौ शिव शिव तान्यपि वासराणि वेधाः। इति खेदे प्रयोगः। अत्र हस्तस्पर्शमात्रेण किसलयतल्पस्य म्लानत्वाऽसम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तिभेदः सम्बन्धातिशयोक्तिः स्यादयोगे

योग कथनं इति लक्षणात्। तथा मन्मथे नायिकायाश्च अग्नित्वस्य अङ्गारत्वस्य च आरोपाद्रूपकालङ्कारः। तदुक्तं आरोपविषयस्य स्यादतिरोहितरूपिणः। उपरञ्जकमारोप्यमाणं तद्रूपकं मतमिति। तथा ग्लापयन्त्या इति प्रथम विशेषणस्यार्थं प्रत्युत्तर विशेषणस्यार्थौ हेतुत्वेनोपात्त इति एकं पदार्थहेतुकं काव्यलिङ्गमलङ्कारः। विशेषणद्वयार्थस्यापि परितापकथनस्याशक्यतां प्रति हेतुत्वादनेकपदार्थहेतुकमपरं काव्यलिङ्गम्। हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम् इति। प्रथमकाव्यलिङ्गस्य अतिशयोक्तिरूपक सापेक्षत्वा द्विजातीय सङ्करः। द्वितीय काव्यलिङ्गस्य तृतीयसापेक्षत्वात् सजातीय सङ्करः। कोमलाङ्ग्या इति विशेषणस्य तीव्रतापासहत्वाभिप्राय गर्भत्वात् परिकरालङ्कारः। अलङ्कारः परिकरः साभिप्राये विशेषणे इति लक्षणात्। तेन च सुकुमाराङ्ग्यालित्वेन अतितीव्रत्वेन घटना-नहैयोर्नायिकासन्तापयो र्घटना जातेति विरूपघटनात्मको विषमालङ्कारः प्रतीयत इत्यलङ्कारेणालङ्कारध्वनिः। कर-सरसिज-सङ्गादित्युपमायाः परिकरस्य अतिशयोक्त्यादि-चतुष्टयस्य च परस्परनैरपेक्ष्यात् संसृष्टिः। अत्र तापो नाम षष्ठी मन्मथावस्था। तथाचोक्तं साहित्यचिन्तामणौ। चक्षुः प्रीतिश्चिन्ता संकल्पो गुणनुतिः क्रियाद्वेषः। तापो लज्जात्यागोन्मादो मूर्च्छामृतिर्दशावस्था इति। तापलक्षणं तत्रैव। तत्प्राप्तेर्विप्रकर्षेण तापःस्या त्कामजो ज्वरःइति। वैवर्ण्यमश्रुवैस्वर्य्यं शयने परिलुण्ठनम्। निश्वास-मुख शोषाद्या अनुभावास्तदुद्भवा इति। द्वादशावस्था-पक्षे तु। संज्वरो नाम नवमावस्था। यथाह विद्यानाथः। चक्षुः प्रीतिर्मनःसङ्ग संकल्पोऽथ प्रलापिता। जागरः कार्श्यमरति र्लज्जात्यागोऽथ संज्वरः।

उन्मादो मूर्च्छनं चैव चरमं मरणं विदुः। अवस्था द्वादश मताः कामशास्त्रानुसारतः। इति। संज्वर लक्षणमपि तेनैवोक्तम्। तापाधिक्यं ज्वरो मत इति। पद्यद्वयमिदं भावप्रकाशे व्यक्तम्। दशधा मन्मथावस्था भवेद् द्वादशधा पुनः। अत्रावस्था प्रतिपादनात् अयोग-विप्रलम्भ शृङ्गारः। तथा चाहुः। सम्प्राप्तः प्रागभावो यस्तमयोगं प्रचक्षते। क्रमेण धर्म्मतस्तत्र तन्मते रतिरीरिता॥ इति लक्षणं तु भावप्रकाशे। सम्पन्नैश्वर्य्य सुखयोरशेषगुणयुक्तयोः। नवयौवनयोः श्लाघ्यप्रकृत्योः श्लाघ्यरूपयोः। नारीपुरुषयोस्तुल्या परस्परविभाविता। स्पृहाह्वया चित्तवृत्तीरतिरित्यभिधीयते इति॥ अवस्थाभि स्तद्वृद्धिक्रमस्त्वेवमभिगन्तव्यः। रम्याऽऽलम्बनदर्शनेन अभिलाषतः प्रथमं चक्षुःप्रीतिः प्रजायते। ततो मनःसङ्गः ततःसङ्कल्पः सङ्कल्पिते वस्तुन्यादरातिशयेन गुणनुतिः। तत्रैव अनुरक्त-चित्ततया अन्यत्र क्रियादेशः। तस्यातिशयेन तापः। तत्प्रकर्षासहिष्णुत्वेन लज्जात्यागः। तेन बुद्धिशैथिल्ये सत्युन्मादः तेन बलक्षये सति मूर्च्छा तदुद्रेकेण मरणं सम्भवति। इमा अवस्थाः अयोगविप्रलम्भे प्रायेण भवन्ति। क्वचित्प्रवासविप्रलम्भादावपि सम्भवति॥ ९॥

शेते शीतकरोऽम्बुजे कुवलय द्वन्द्वा द्विनिर्गच्छति
स्वच्छामौक्तिक-संहति र्धवलिमा हैमीं लतामञ्चति।
स्पर्शात्पङ्कज-कोशयोरभिनवा यान्ति स्रजःक्लान्ततां
एषोत्पात परम्परा मम सखे! यात्रा स्पृहां कृन्तति॥१०॥

पूर्व्वं कृत यात्रानिश्चयः सम्प्रति कुत स्तस्मात्प्रवासादिरम्य स्थितोऽसीति सुहृदापृष्टो नायकः सकौशलमाह। शेत इति। शीत-

करः चन्द्रः अम्बुजे शेते निश्चलत्वेनावतिष्ठते। चन्द्रस्याकाशाङ्गते पद्मे निपतनमित्येको महानभूत-पूर्व्वः उत्पातः। तथा स्वच्छा विमला मौक्तिकानां संहतिः समूहः कुवलय-द्वन्द्वादुत्पल-द्वन्द्वा द्विनिर्गच्छति विशेषेण वहिर्निर्याति । करीन्द्र जीमूतवराहशङ्खमत्स्याहिशुक्त्युद्भववेणुजानि। मुक्ताफलानि प्रथितानि लोके तेषां हि शुक्त्युद्भवमेव भूरि॥ इति रत्नशास्त्रे प्रसिद्धादुत्पत्तिस्थानादन्यत्रमौक्तिकोत्पत्तिरन्य उत्पातः। धवलिमा धावल्यं हैमीं कनकमयीं लतामञ्चति॥ प्राप्नोति। निसर्गेण पिशङ्ग्याः कनकलतायाः आकस्मिकवर्णान्तर प्राप्तिरपर उत्पातः। अभिनवाः स्रजः। पुष्पमालिकाः पङ्कजकोशयोः पद्मकुड्मयोः स्पर्शात् क्लान्ततां म्लानतां यान्ति प्राप्नुवन्ति। अभिनवत्वेन पूर्वमम्लानानामिव स्रजां अग्निवस्तु-स्पर्शादिव पङ्किलस्थलवर्त्तित्वेन शिशिरयोरपि पद्मकुड्मलयोः स्पर्शात्सद्य एव परिम्लानत्वं जायत इति उत्पातान्तरम्। हे सखि! एषा चन्द्रपातादिरूपा उत्पात-परम्परा भाव्यनर्थ सूचकानि विपरीतानि निमित्तानि उत्पाताः तेषां परम्परा मम यात्रास्पृहां क्रन्तति। प्रयाणेच्छां छिनत्ति। कृतच्छेदन इति धातो र्दैवादिकाल्लट्। शेमुचादीनामिति नुमागमः। एतानुत्पातान्वीक्ष्य निवृत्त प्रयाणस्पृहोऽस्मि। उत्पातदर्शने प्रयाणनिषेधादिति भावः। मत्प्रयाणात्प्रागेव जातैः प्रयाणोत्तरभाविनीं कान्तायाः चरमदशां सूचयद्भिः चिन्ताङ्गवैवर्ण्य सन्तापैः निवृत्त-यात्रा-स्पृहोऽस्मीति विवक्षितार्थः। अत्र शीतकराम्बुजकुवलयमौक्तिकहैमलतापङ्कजकोशशब्दाः साध्यवसान लक्षणया क्रमेण मुखहस्तनयनवाष्पविन्दुमूर्त्ति स्तनपराः। अम्बुजे शीतकरः शेत इत्यनेन मुखस्य

हस्तार्पितत्वं प्रतिपाद्यते। तेन चिन्ता व्यज्यते। मौक्तिक संहतिः कुवलय द्वन्द्वा द्विनिर्गच्छतीत्यनेन गलद्वाष्पबिन्दुपूर्णनेत्रत्वं प्रतिपाद्यते। स्वच्छेति विशेषणेन बाष्पसंहतेर्निःशेषनिवर्त्तिताञ्जनत्वं गम्यते॥ तेन बाष्पवृद्धेरनल्पत्वं प्रतीयते। तेन दुःखस्योत्कटत्वं व्यज्यते। धवलिमा हैमीं लतामित्यनेन तापकृतं वैवर्ण्यं प्रतिपाद्यते। तल्लक्षणं तु साहित्यचिन्तामणौ। वैवर्ण्यं वर्णभेदः स्यात् ताप-शोक-भयादिभिः। इति। स्पर्शात्पङ्कजकोशयोरित्यादिना स्तनयुगल सङ्गमात्रेण स्रजः परिम्लानत्वं प्रतिपाद्यते। तेन विरहताप प्रकर्षः प्रतीयते। अत्र प्रियप्रवासरूपहेतु-प्रसक्तिमात्रेण चिन्तादिरूपकार्य्यस्य वर्णनाच्चपलातिशयोक्तिरलङ्कारः। तथा मुखादीनां विषयानां स्ववाचकशब्दान् गृहीत्वा चन्द्रादिविषयिवाचक शब्दैरेव प्रतिपादनात्। भेदेऽप्यभेदकल्पनरूपा अतिशयोक्तिः। विषयस्यानुपादानाद्विषय्युपनिबध्यते। यत्र सातिशयोक्तिःस्यात्कवि प्रौढ़ोक्ति जीवितेति लक्षणात्। तथा चन्द्रस्याम्बुजोपरि शयनवर्णनात् द्रव्य क्रियोर्विरोधः। हेमलताया धावल्य प्रतिपादना ज्जातिगुणयोश्च विरोधालङ्कारः। कुवलयान्मुक्ता फलोत्पत्तेः पङ्कजकुड्मलस्पर्शात् पुष्पमालानां म्लानत्व सम्भवस्य च प्रतिपादनादकारणात् कार्योत्पत्तिरूपा विभावना। अकारणात् कार्य्यजन्म चतुर्थी स्या द्विभावना। इति। विरोध भेदयोर्विभावनायाश्च भेदातिशयोक्ति-सापेक्षत्वात् तया सहाङ्गाङ्गिभावेन सङ्करः। विरोधाभेदयो र्विभावनायाश्च परस्पर नैरपेक्ष्यात् संसृष्टिः। अतिशयोक्त्योरपि तथैव संसृष्टिः। नायकोऽनुकूलः। एकायत्तोऽनुकूलः स्यात् तुल्यो नैकत्र दक्षिणः। व्यक्तागानिर्भयो धृष्टोगूढ़ विप्रियकृच्छठः इति लक्ष-

णात्। नायिका स्वाधीनपतिका। स्वाधीनपतिका सा स्यात् यां न मुञ्चति वल्लभः इति लक्षणात्। प्रवास प्रसक्ति हेतुकस्य चिन्तादे र्वर्णनात् प्रवास विप्रलम्भ शृङ्गारः॥ १० ॥

दूतीदं नयनोत्पलद्वय महो! तान्तं नितान्तं तव
स्वेदाम्भः कणिका ललाट फलके मुक्ता-श्रियं बिभ्रति।
निश्वासाः प्रचुरी-भवन्ति नितरां हा! हन्त! चन्द्रातपे
यातायातवशाद्वृथा मम कृते श्रान्तासि कान्ता-कृते!॥ ११॥

नायकमानेतु गत्वा स्वयमेव तेन साकं विहृत्यागतां तद-नागमननिमित्तमन्यदेव किञ्चित्प्रकटयन्तीं मुखस्वेद-जलकणै-श्चिह्नितां दूतिकां विटोपभोगदर्शनेन जातेर्ष्या नायिका चातुर्य्येण मर्मोद्घाटनं कुर्व्वन्ती प्राह। दूतीति। हे दूति! तव इदं नयने एव उत्पले इति रूपकसमासः। तयोर्द्वयं नितान्तं अत्यन्तं तान्तं म्लानम्। अहो! उत्पलस्य चन्द्रिकायां म्लानत्वमसम्भा-वितं तदप्यधिकमित्याश्चर्य्यं तथा स्वेदाम्भःकणिकाः ललाटफलके मुक्ता-श्रियं बिभ्रति मौक्तिकशोभां वहन्ति स्वेदोऽप्यनल्प एवेति भावः। निश्वासा नितरां प्रचुरी-भवन्ति बहुलायन्ते। हे कान्ता-कृते! रमणीयाकारे! मम कृते मदर्थं कृते इति तादर्थ्येऽव्ययम्। अर्थे कृते च तादर्थ्ये द्वयमित्यव्ययमित्यभिधानात्। वृथा व्यर्थं चन्द्रातपे चन्द्रिकायां सुकुमाराङ्गास्तव चन्द्रिकाप्यातपकल्पा जायत इत्याशयेन आतपशब्दः। यातायातवशात् मद्वल्लभगृह-वर्त्मनि गतागतवशात् श्रान्तासि। हा हन्तेति। पदद्वयोक्तिः विषादातिशयात्। विषादोऽत्र दूतिकाश्रमदर्शनजनितः स च मृषाभूतः कैतवेनाभिनीयमानत्वात्। वृथा मम कृते श्रान्ता-

सोत्यत्र मत्कार्य्यं प्रत्येव तव श्रमो विफलः । स्वकार्य्यं प्रति तु सफल एवेत्यर्थः । मद्वल्लभमानेतुं गतायास्तव न केवलमीप्सिता-लाभः । यातायातजनित श्रमाधिक्येन रमणीयायास्तत्र आकृतिवैकृतमपि जातमिति वाच्यार्थः । अद्भुतोऽयं श्रमः तव नायकगृहवर्त्मनि यातायाताभ्यामेवोत्पन्नः,चन्द्रिकायां स्वगृहात् गृहान्तरं प्रति सञ्चारमात्रेण तवैतादृशश्रमजनकत्वायोगात् मद्वल्लभोपभोग्यसंमर्द एवेति व्यङ्ग्यार्थः । कान्ताकृते इति सौन्दर्य्योद्घाटनेन नायं तवापराधः । किन्तु सौन्दर्यशालित्वेन दौत्यानर्हां त्वा च्चपलचित्तं नायकं प्रति दौत्ये नियुक्तवत्या ममैवापराध इत्यात्मोपालम्भो द्योत्यते । दौत्यानर्हा भरतशास्त्रे प्रतिपादिताः । नोज्वलं रूपवन्तं वा नार्थवन्तं न चातुरम् । दूतं वा पि हि दूतीं वा बुधः कुर्यात् कदाचन । इति । अत्र मृषादरादिभिः क्रोधेर्ष्यासूचकाकारगोपनस्य गम्यत्वात् । अवहित्थाख्यः सञ्चारीभावः । आकार गोपन न्धैर्य्यलज्जादेरवहित्थकः । अन्यथा कथनं दृष्टिरन्यथा च मृषादरः । विषादधैर्य्ये कृतके तथा भङ्गश्च तद्गुणाः इति । अत्र नेत्रयोरुत्पलत्वरूपणात् रूपकालङ्कारः । उत्पलस्य चन्द्रिकायां म्लानत्वमिति जातिगुणयोर्विरोधप्रतिपादनात् विरोधालङ्कारः । स च रूपकोत्थापित इति तयोरङ्गाङ्गिभावेन सङ्करः । मुक्ताश्रियं बिभ्रतीत्यत्र अन्य धर्म्मस्य अन्ययोगासम्भवेन श्रियमिव श्रियमिति सादृश्याक्षेपान्निदर्शनालङ्कारः । असम्भवद्धर्म्मयोगादुपमानोपमेययोः । प्रतिबिम्ब क्रिया गम्या यत्र सा स्यान्निदर्शना । इति । नायकानयनरूपेष्टानवाप्ति पूर्विकायाः श्रमनिमित्ताकृतिवैकृतरूपानिष्टावाप्तेः समर्थनाद्विषमालङ्कारः । लक्षणन्तूक्तम् । अनयोः प्रागुक्तालङ्कारद्वयस्य च परस्परनैरपेक्ष्यात् संसृष्टिः ॥ ११ ॥

अधिवसति वसन्ते मर्तुकामा दुरन्ते
नवकिसलयतल्पं पुञ्जिताङ्गारकल्पम्।
विरहमसहमाना चक्रवाकी-समाना
चकित-वन-कुरङ्गी-लोचना कोमलाङ्गी॥ १२॥

वसन्तसमये सम्बर्द्धमानविरहवेदना-सहन सामर्थ्याभावेन बलाच्चरमदशामुपयातुं प्रयतमानां नायिकां विलोक्य शोचन्ती-तस्याः प्रियसहचरी काचिदाह। अधिवसतीति। चक्रवाकी-समाना चक्रवाकीव प्रिये गाढानुरागेत्यर्थः। चकिता भीता या वनकुरङ्गी काननहरिणी तस्या लोचने इव लोचने यस्याः सा तथोक्ता। कुरङ्गीति स्त्रीव्यक्ति-ग्रहणं तस्या वन-सम्बन्धित्वेन कथनञ्च भयस्य अतिशयं प्रदर्शयितुम्। तत्प्रदर्शनन्तु कुरङ्गलो-चनयोश्चाञ्चल्यशालिताद्योतनद्वारा नायिकानयन रामणीयक प्रत्यायनार्थम्। एतादृश सौन्दर्यशालिनी सखी भूयः क्वापि न दृश्यते खल्विति भावः। कोमलाङ्गी सुकुमारगात्री। नायिका वर-सौकुमार्य-शालिनोऽङ्गस्य तीव्रतापा-नर्हत्वात् पल्लवाङ्गार-शय्याधिरोहणक्षण एव मरिष्यतीति भावः। दुष्टुः अन्तः अव-सानं यस्य सः दुरन्तः मन्दानिल-कोकिलालापादि-कामोद्दीपन-सामग्रीशालितया वियोगिना मप्राप्यपारे तस्मिन् वसन्ते। विर-हमसहमाना मर्तुं प्राणान् विहातुं कामोऽभिलाषो यस्याः सा। तुङ्काम मनसोरपीति मकारलोपः। तदा ततोऽन्यस्य दुःख-सागर-निस्तारोपायस्याभावादिति भावः। पुञ्जितो राशीकृतः सचासावङ्गारश्चेति पुञ्जिताङ्गारः। जातावेक वचनम्। ईषद-समाप्तः पुञ्जिताङ्गारः पुञ्जिताङ्गारकल्पं तत्। ईषदसमाप्तौ

कल्प प्रत्ययः। यद्वा मासु जातावेक वचनम्। सुपो धातु प्रातिपदिकयोरिति बहुवचनस्य लुक् पुनस्तद्धितान्तोत्पत्तौ विशेष्यानुरोधेन एकवचनस्य सम्भवात्। आकारेण सन्तापकरत्वेन च ज्वलदङ्गारराशि सदृशमित्यर्थः। विरहिणीप्राणवियोजनसामर्थ्यसम्पन्नमिति भावः। नवकिसलयतल्पं तरुण-पल्लवमयीं शय्यामधिवसति। अधितिष्ठति। उपान्वध्याङ् वस इति वसतेराधारस्य कर्मत्वम्। अत्र मरणोद्योगवर्णनान्मृतिर्नाम चरमा मन्मथावस्था। स्मरार्त्तो मन्मथोद्योगो मृतिरित्यभिधीयत इति लक्षणात्। इह पुञ्जिताङ्गार कल्पमित्यत्र अनुपात्तधर्मा तद्धितगतार्थीलुप्ता। चक्रवाकी समानेत्यत्र अनुपात्तधर्मा समासगतार्थीलुप्ता। कुरङ्गीलोचनेत्यत्र अनुपात्तधर्मा वाचकोपमाना लुप्ता। उपमा-त्रयस्य परस्पर-नैरपेक्ष्यात्संसृष्टिः। पुञ्जिताङ्गार कल्पमिति तल्पविशेषणस्य प्राणहरण सामर्थ्याभिप्रायगर्भत्वात्परिकरः। स च तद्धितगतोपमानसंग्रहीत इति द्वयोरङ्गाङ्गिभावेन सङ्करः। चकितवन-कुरङ्गीलोचना कोमलाङ्गीति नायिकाविशेषणद्वयस्यापि साभिप्रायत्वादन्यः परिकरः। तस्य च प्रागुक्तालङ्कार-चतुष्टयेन सह संसृष्टिः। चक्रवाकी समानेति नायिकाविशेषणार्थस्य दुरन्त इति वसन्तविशेषणार्थस्य च विरहासहनप्रयुक्तं मरणोद्योगं प्रति हेतुत्वात् काव्यलिङ्गमलङ्कारः। चक्रवाकी समानेति समासगतोपमया पुञ्जिताङ्गारकल्पमित्युपमासंकीर्णं परिकरेण च परिपोषं प्रापित इति चतुर्णां सङ्करः। नायिकाश्रयस्य प्रवास-विप्रलम्भ-शृङ्गारस्य सन्निकृष्ट करुणरसं प्रत्यङ्गत्वाद्रसवदलङ्कारः। प्रतिपादमेकैकस्य वर्णस्य खण्डद्वयान्तर्गतत्वेन आवृत्तत्वात् वृत्त्यनुप्रासभेदः। अनयोः प्रागुक्तानां च

संसृष्टिः। करुणरसलक्षणन्तु साहित्यचिन्तामणौ। धर्म्मनाशोऽर्थ-नाशश्च बान्धवेष्ट-धनक्षयः। बधो बन्धश्च दारिद्र्यं पदभ्रंशः पराजयः। दैवोपघातधिक्कारौ व्याधिःशापोऽभिशंसनम्। इत्यालम्बनं दृष्टं अनुभूतं श्रुतञ्च वा। यस्य चोद्दीपनं ज्ञेयं आलम्बनगुणादिकं। केशपाशाङ्ग संस्कार वैधुर्य्यं स्रस्तमानता। इत्यादिना हाहाकारस्तथा क्रन्दो विलापः परिदेवनम्। भावाःस्तम्भादयः सर्वे भवेयुरनुभावकाः। उत्तमाधममध्येषु यथायोग्यं भवन्त्यमी। निर्वेदो दैन्यमालस्यं उन्माद-व्याधि-सम्भ्रमः। निद्रा-मोहश्रमोग्लानिः चिन्तामरण-चापले। विषादो जाड्यमौत्सुक्यं शङ्कास्मृतिरपस्मृतिः। स शोक स्थायिकस्तन्द्रीकरुणारस इष्यते इति। शोकलक्षणमपि तत्रैव। इष्टनाशादिभिर्दुःखप्रकर्षः शोक उच्यते। अश्रुभ्रूलुण्ठनस्वाङ्गताड़नाद्यनुभावभागिति। नायिका प्रोषित-भर्त्तृका। लक्षणन्तूक्तम्। चकित-वन-कुरङ्गीलोचना कोमलाङ्गीति विशेषणद्वयेन अस्याः पद्मिनीत्वं सूच्यते। तल्लक्षणन्तु रतिरहस्ये। कमलमुकुलमृद्वी फुल्ल-राजीव गन्धः सुरतपयसि यस्याः सौरभन्दिव्यमङ्गे। चकितमृग दृगाभे प्रान्त-रक्ते च नेत्रे स्तन-युगलमनर्घ्यं श्रीफल श्रीविडम्बि। इत्यादिना। मृदु शुचि लघु भुङ्क्ते मानिनी गाढलज्जा धवलकुसुमवासाववल्लभा पद्मिनी स्यात्। इति॥ १२॥

नैष्ठुर्यं कलकण्ठ कोमलगिरां पूर्णस्य शीतद्युते-
स्तिग्मत्वं वत दक्षिणस्य मरुतो दाक्षिण्यहानि च ताम्।
आर्त्यात्कृतिमेत्र कर्त्तुमबलां सन्नाहमातन्वते
तद्भिन्नः क्रियते द्रुमादिचलनोद्भूतैस्त्वदाशिभ्रमैः॥ १३॥

प्रियागमन समये किञ्चिदतिक्रान्ते स्मरार्त्तया नायिकया प्रेषिता दूती नायकमाह। नैष्ठुर्यमिति। कलकण्ठाः कोकिलाः कलकण्ठस्तु कोकिले इति रत्नमाला। तेषाङ्कोमलगिरः मृदुलवाचः तासां नैष्ठुर्यं परुषत्वं तथा पूर्णस्य शीतद्युतेः पूर्णचन्द्रस्य तिग्मत्वं तीक्ष्णत्वम्। तिग्मन्तीक्ष्णं खरन्तद्वदित्यमरः। तथा दक्षिणस्य दक्षिणदिग्भवस्य मरुतः वायोः दाक्षिण्यहानिः दाक्षिण्यं परच्छन्दानुवृत्तिः तस्य हानिश्च। दक्षिणःसरले याम्ये परच्छन्दानु वर्तिनि। इति रत्नमाला। तां प्रकृतामबलां बलहीनत्वादिहमात्रं विद्यते। मृदुःसर्वत्र बाध्यत इति न्यायादिति भावः। स्मर्तव्याकृतिमेव न तु दर्शनयोग्याकृतिं कर्तुं सन्नाहमातन्वते कुर्वन्ति। चरमदशामेव प्रापयितुं प्रयतन्त इत्यर्थः। वतेति खेदे। सौम्या अपि विपरीताः सन्तः अबलां मारयितुं सन्नह्यन्तीतिखेदः। यद्वा वतेति विस्मये कोमलानां निष्ठुरत्वं शीतस्य तिग्मत्वं दक्षिणस्य दाक्षिण्याभावश्चेति विपरीतधर्मदर्शनाद्विस्मयः। भेदानुकम्पाऽसन्तोष-विस्मयाऽऽमन्त्रणे वतेति रत्नमाला। किन्तु तृणादीनां चलनेन उद्भूतैः उत्पन्नैः त्वदाप्ति भ्रमैः त्वत्प्राप्तिभ्रान्तिभिः तद्विघ्नः तस्य मारण प्रयत्नस्य विघ्नः क्रियते। कोमलाः कोकिलालापाः अत्यन्त-शीतल-सकल-कलाशाली चन्द्रः शैत्यसौरभ्य मान्द्यसम्पन्नतया मनोहरा मलयमारुतश्च सम्प्रति त्वयि विलम्बमाने विपरीताभूत्वा दुस्सह वेदनोत्पादनेन नायिकायाः प्राणहरणोद्योग मेव कुर्वन्ति। किन्तु कान्ता द्वारि दत्तदृष्टिः त्वदागमनं प्रतीक्षमाणा तृणादि चलनेऽपि भ्रान्तिवशेन क्षणे क्षणे त्वामेवागतमन्यमाना कथञ्चि दाशया प्राणानवलम्ब्य वर्तत इति विव-

क्षितार्थः। इत ऊर्द्धं भवदागमनस्य विलम्बे सति नैराश्येन प्राणान् परित्यजेत शीघ्रमागत्य त्वदधीनजीवितां तामुपजीवयेति भावः। अत्र विवक्षितार्थस्य भङ्ग्यन्तरेणाभिधानात् पर्यायोक्तिभेदः। तथा। कोमला अपि निष्ठुरा इत्यादि विरोधदर्शनात् विरोधालङ्कारः। स च दक्षिणस्य दाक्षिण्यहानिरित्यत्र श्लेषसङ्कीर्णः। इतरत्र तु शुद्धः। अबलामिति विशेष्यस्य साभिप्रायत्वात् परिकराङ्कुरालङ्कारः। साभिप्राये विशेष्ये तु भवेत् परिकराङ्कुरः इति लक्षणात्। विरहविप्रलम्भशृङ्गारः। विरहलक्षणन्तु साहित्य-चिन्तामणौ। कालक्षेपे तु सम्प्राप्ते कार्याद्व्यापारतन्त्रतः। एकग्रामस्थयोर्यूनोर्विरहः सोऽभिधीयते। औत्सुक्यचिन्तानिःश्वासवितर्काद्यनुभावभागिति। नायिकात्र विरहोत्कण्ठिता। चिरयत्यधिकं कान्ते विरहोत्कण्ठितोन्मनाः। इति लक्षणात्। उत्कण्ठा अस्याः सञ्जाता इति उत्कण्ठिता। विरहेण उत्कण्ठिता विरहोत्कण्ठिता। तथाचोक्तं साहित्य-चिन्तामणौ। विरहेण कृतोत्कण्ठा विरहोत्कण्ठिता मतेति। उत्कण्ठा नाम वेदनाविशेषः। तथा चाहुः। रागेत्वलब्धविषये वेदना महती तु या। संशोषणी च गात्राणां तामुत्कण्ठां विदुर्बुधा इति॥ १३॥

सास्रे मा कुरु लोचने विगलति न्यस्तं शलाकाञ्जनं
तीव्रं निःश्वसितं निवर्तय नवा म्लाम्यन्ति कण्ठस्रजः।
तल्पे मा लुठ कोमलाङ्गि! तनुतां हन्ताङ्गरागोऽश्नुते
नातीतो दयितोपयानसमयो मास्मान्यथा मन्यथाः॥ १४॥

आत्मानं सम्यगलङ्कृत्य रमणस्य आगमनमाकाङ्क्षन्तीं

तस्मिन् कार्यवशात् कालविलम्बं कुर्वाणे दुर्वारसन्तापाकुलां नायिकां काचिच्चतुरा सखी तापवेगसहनाय मण्डनलोपोपपादनपूर्वकं उपलालयन्ती प्राह। सास्रे इति। लोचने सास्रे सबाष्पे मा कुरु। अश्रुविमोचनं मा कथा इत्यर्थः। अस्रुशोणितयोरस्रम्। इति रत्नमाला। सास्रे चेत् किं स्यादित्यत आह। विगलितमिति। न्यस्तं निहितं शलाकाञ्जनं शलाका अञ्जननिवेशनाय सुवर्णादिकल्पिता तस्या अञ्जनं तत्कृतमञ्जनमिति यावत्। अत्र शलाकाग्रहणं अञ्जनरेखायाः नातिस्थूलत्वनातिकृशत्वद्योतनार्थम्। विगलति बाष्पयोगेन च्युतिं प्राप्नोति। तथा च शलाकारचिते अत एव तदाकृतिनि तस्मिन्नञ्जने गलिते सति नयनयोर्महती शोभाहानिः स्यादिति भावः। तीव्रमुष्णम्। तीव्रः कटुभृशोष्णेषु इति रत्नमाला। निश्वसितं निवर्तय। तस्मिन् वर्तमाने किं स्यादित्यत आह। नवाः। सद्योऽपचितैः पुष्पैः विरचिता इत्यर्थः। कण्ठस्रजः कण्ठेऽर्पितानि माल्यानि ताम्यन्ति निःश्वाससवायुप्रसारेण म्लाना जायन्ते म्लानतां यान्ति तासां रामणीयकं विनश्यतीति भावः। हे कोमलाङ्गि! ईदृक्कष्टानर्हे इति भावः। तल्पे शय्यायां मा लुठ पुनःपुनर्मा परिवर्तस्व। तत्र लुण्ठने किं स्यादित्यत आह। तनुतामिति। अङ्गराग अनुलेपनम्। तनुतां कृशताम् अश्नुते प्राप्नोति। आस्तरणसङ्घर्षेण तत्र विशीर्यत इत्यर्थः तस्मिन् विशीर्णे गात्रं धूलीधूसरमिव स्थितं सत् नयनसुभगं न भवेदिति भावः। हन्तेति खेदे। ननु वल्लभसमागमे सति खलु सत्यमिदं मण्डनं सफलं स्यात्। तदभावे तस्मिन् मण्डने गते का हानिः स्थिते को लाभ उभयथापि वैयर्थ्यात् इत्याशङ्कायामाह।

दयितोपयानसमयः प्रियप्राप्तिकालः नातीतः नातिक्रान्तः। तस्मान्महता प्रयत्नेन विरचितोऽयं शृङ्गारवेषः सर्वप्रकारेण रक्षणीय एवेति भावः। अन्यथा अन्यप्रकारेण मास्म मन्यथाः कालातिक्रमो जातः सम्प्रति वल्लभो नागमिष्यतीति न मन्यस्वेत्यर्थः। दुःशङ्कादिभिर्मनो वृथा खेदाकुलं मा कृथा इति भावः। अत्र अञ्जनगलनाद्यनभिमतकार्य्यमुखेन तत्तत्कारणानामश्रुविमोचनादीनां निवर्तनीयत्वेन समर्थनात् कार्येण कारणसमर्थनरूपोऽर्थान्तरन्यासः। कार्यकारणसामान्यविशेषाणां परस्परम् समर्थनं यत्र सोऽर्थान्तरन्यास उदाहृतः इति लक्षणात्। उक्तिरर्थान्तरन्यासः स्यात् सामान्यविशेषयोरिति लक्षणमुक्त्वा सामान्येन विशेषस्य विशेषेण सामान्यस्य यत्र समर्थनं तत्रैव अर्थान्तरन्यास इति यैरुक्तं तन्मते अत्र वाक्यार्थहेतुकं काव्यलिङ्गम्। पादत्रयेऽपि पूर्ववाक्यार्थं प्रत्युत्तरवाक्यार्थस्य हेतु कालविलम्बासहनस्य व्यज्यमानत्वादौत्सुक्यं नाम सञ्चारी भावः। कालाक्षमत्वमौत्सुक्यमप्राप्ते रिष्टवस्तुनः। सन्तापः शयने चिन्ता निःश्वासो गमनोद्यमः। अनवस्थितिरित्याद्या भजन्त्यत्रानुभावतामिति लक्षणात्। विरहविप्रलम्भशृङ्गारः। नायिकात्र प्रौढा वासकसज्जिका भूत्वा पश्चाद्विरहोत्कण्ठिता जाता। वासकसज्जिकालक्षणं तु साहित्यचिन्तामणौ। सम्प्राप्ते वासके या तु सम्भोगसुखलालसा। रशनानूपुरप्राय तत्कालोचितभूषणा। धूपादिभिरलङ्कृत्य केलीभवनमात्मनः। सम्पाद्य हृद्यताम्बूलवस्त्रमाल्यानुलेपनम्। प्रियागमं प्रतीक्षेत सा स्याद्वासकसज्जिका। वासके सज्जा सन्नद्धा वासकसज्जिका वासयति नायकं प्रियावेश्मनीति वासको वारादिः। तथा

चाहुः। वारश्च ऋतुकालश्च प्रवासादागतः प्रियः। प्रसाधनञ्च तुष्टाया नायिकायास्तथोद्यमः। नवोढाभ्युपपत्तिश्च षडेते वासकाः स्मृताः इति। विरहोत्कण्ठितालक्षणन्तूक्तम्। नवधा खलु स्वाधीनपतिकादयः परस्परविलक्षणाः शृङ्गारनायिकाः प्रसिद्धाः। कथमेकस्या एव द्वैविध्यमेवं प्रतिपाद्यते। उच्यते। नायिका तावत्प्रथमं त्रिविधा। स्वकीया। परकीया। साधारणा चेति। तत्र स्वकीया त्रिविधा। मुग्धा। मध्या। प्रगल्भा चेति। परकीया द्विविधा। कन्या परोढा चेति। कन्या च द्विविधा। मुग्धा मध्या चेति। परोढा तु प्रायेण प्रगल्भा। साधारणी वेश्या। सा यौवनोदयप्रभृति प्रगल्भैव। न मुग्धा मध्या च। एता एवावस्थाभेदेन यथासम्भवं स्वाधीनपतिकारूपेण अष्टधा भवन्ति। सर्वमिदं स्पष्टीकृतं साहित्यचिन्तामणौ। रूपयौवनलावण्यलज्जामाधुर्य्यशालिनी। सौभाग्यौदार्य्यसम्पन्ना नायिका सा पुनस्त्रिधा॥ स्वाऽन्या साधारणी चेति तत्र स्वीयापरिग्रहात्। साध्वी विनयसम्पन्ना कुलशीलार्जवान्विता। मुग्धा मध्या प्रगल्भेति स्वकीया त्रिविधा मता। अन्यान्यदीया सा कन्या परोढा द्विविधा मता। रूपादिगुणसम्पन्ना कन्या मुग्धा च मध्यमा। साधारणी तु गणिका रूपसौभाग्यशालिनी। कलावती चार्थपरा सा प्रगल्भैव वर्ण्यते। एताः पुनरवस्थाभिरष्टधा स्युर्यथोचितः। ताश्चान्यथा भवन्ति। तथाहि। स्वाधीनपतिकैव ऋतुकालादिरूपवासके प्राप्ते वासकसज्जिका। भवति। सैव कालाऽगमत्वेन स्वयमेवाभिसारिका भवति। भर्त्तरि आप्रभातमनागते विरहोत्कण्ठिता विप्रलब्धा भवति। भर्तुरन्यासक्तिं विशङ्क्य कुपिता चेद्विप्रलब्धा खण्डिता भवति। प्राप्तं

प्रियं कोपाग्निरस्य पश्चात्तापमुपगता चेद्विप्रलब्धेव कलहान्त-रिता भवति। खण्डिताप्येवं कलहान्तरिता भवति। एताः सर्वाः प्रिये देशान्तरङ्गते प्रोषितभर्तृका भवन्ति। प्रोषितभर्तृका प्रिये प्रत्यागते वासकसज्जिका भवति। तस्मात् प्रकृते एकस्या एव नायिकाया अवस्थाभेदमाश्रित्य द्वैविध्योक्तिरविरुद्धेति सर्वम-वदातम् ॥ १४ ॥

काचित् सर्वजनीनविभ्रमपरा मध्ये सखीमण्डलं
लीलाक्षि भ्रुवसंज्ञया विदधती सख्या सहाभाषणम् ।
अक्ष्णो रञ्जनमञ्जसा शशिमुखी विन्यस्य वक्षोजयोः
स्थूलभावुकयोः स्थितं मणिसरञ्चैलाञ्चलेनप्यधात् ॥ १५ ॥

जनसन्निधौ सङ्केतकालजिज्ञासया संज्ञां कुर्वन्तीं जारप्रेषितां दूतिकां प्रति कामिन्याः साकूतचेष्टां कविराह । काचिदिति। सर्वस्मै जनाय हिताः सर्वजनीनाः। सर्वजनात् ठञ् खश्चेति हितार्थे खप्रत्ययः। आयनेयानित्यादिना खस्य ईनादेशः। ते च ते विभ्रमाश्च ते परा इष्टतमा यस्याः सा तथोक्ता। सर्वजनहितविलासप्रधानेत्यर्थः। संज्ञिनां नयना-दीनां सहजविभ्रमशालित्वादागन्तुकसंज्ञाभूताः कटाक्षभ्रूवि-क्षेपादयः संज्ञा इति ज्ञातुमशक्या इति भावः। अत्र सहजेन आगन्तुकतिरोधानरूपं मीलनं व्यज्यते इत्यलङ्कारध्वनिः। मीलनं वस्तुना यत्र वस्त्वन्तरनिगूहनम् ॥ इति लक्षणात्। काचित् शशिमुखी चन्द्रवदना। मध्येसखी मण्डलम्। सखीवर्गस्य मध्ये। पारे मध्ये षष्ठ्या वेत्यव्ययीभावः। मध्यशब्दस्य निपातनादेत्वम्। दूत्या सह। अक्षिणी च

भ्रुवौ च शशिभ्रुवमिति द्वन्द्वः अचतुरेत्यादिना निपातनात् साधुः। प्राण्यङ्गत्वादेकवद्भावः। लोलं चलं यदक्षिभ्रु वं तस्य या संज्ञा सूचनीयार्थसूचनपरश्चेष्टाविशेषः। संज्ञा स्यादर्क-जायायां चैतन्येऽप्यर्थसूचने इति रत्नमाला। तया करणेन भाषणं विदधती कुर्वन्ती। परेषु शृण्वत्सु परस्परार्थकथनस्या-युक्तत्वादविज्ञातं नेत्रादिसंज्ञयैव वाग्व्यापारसाध्यं साधय-न्तीत्यर्थः। अञ्जसा शीघ्रं अक्ष्णोर्नयनयोरञ्जनं विन्यस्य विशे-षेण निधाय। अस्थूलौ स्थूलौ भवतः स्थूलंभावुकौ तयोः वक्षोजयोः स्तनयोः स्थितं मणिसरं रत्नमालां चेलाञ्चलेन वस्त्रान्तेन पिधात् छादयामास। अपि पूर्वाद्धधाते र्लुङ्। अत्र मुखशशिस्पर्शपूर्वकाञ्जनस्थानेन मणिसरच्छादनेन सान्द्रच-न्द्रिकापगमानन्तरं वहिः सर्वत्रान्धकारे सान्द्रीभूय दृष्टिप्रतिरो-धके जाते गृहेषु दीपनिर्वापणे च कृते कान्तेनाधिष्ठितं देशं प्रति मया गूढमागम्यत इति स्वैरिण्या दूतीं प्रति सङ्केत कालः सूचितः। अत एवात्र सूक्ष्मालङ्कारः। सूक्ष्मं पराशयाभिज्ञे तर-साकूतचेष्टितमिति। संस्कारविशेषशालिशब्दप्रयोगसद्भावात् सौशब्द्याख्यो गुणः। तदुक्तं शब्दशास्त्रे। विज्ञेया श्लाघ्यसंस्कार-शालिता। शब्दानां विद्यते यत्र सौशब्द्यं तत्र कथ्यते। इति। इच्छाप्रयुक्तं चेष्टाकृतं नर्म। प्रियोपच्छन्दनकृते कृतं विषयचेष्टितैः। विदग्धक्रीडितं नर्म हासेच्छाभयमानभागिति लक्षणात्। प्रियोपच्छन्दनकृते नायकस्य नायिकाया वा मनोऽनुरञ्जनार्थमि-त्यर्थः। कैशिकयाख्या वृत्तिः तस्याः प्रथममङ्गं नर्मेत्याहुः। तदु-क्तम्। नर्म च नर्मसन्दो नर्मस्फोटोऽथ नर्मगर्भश्च। कैशिक्या-श्चत्वारि प्रोक्ताऽङ्गानि चैतानि। इति। कैशिक्यादिवृत्तयश्चत्वारः।

तासु रसावस्थानसूचकाः । तदुक्तम् । कैशिक्यारभटी चैव सात्वती भारती तथा । चतस्रो वृत्तयो ज्ञेया रसावस्थानसूचका इति । तत्र कैशिकी वृत्तिः शृङ्गाररसप्रधाना । तथा चोक्तं साहित्यचिन्तामणौ । शृङ्गारे कैशिकीवृत्तिर्नियता समुदाहृता । इति । कैशिकीवृत्तिलक्षणमपि तत्रैवोक्तम् । गीतनृत्यविहाराढ्या रम्यनैपथ्यभूषणा । कामोपचारसम्पन्ना कैशिकीवृत्तिरिष्यते । इति । यूनोरानन्दजनकं दर्शनालिङ्गनादिरूपं कर्म कामोपचारः । स एव सम्भोग इत्युच्यते । तदुक्तं भावप्रकाशे । कामोपचारः सम्भोगः कामः स्त्रीपुंसयोः सुखम् । सुखमानन्दसम्भेदः परस्परविमर्दजः । उपचारः सदानन्दकारकं कर्म कथ्यते । नायिका परकीया । अभिसरणोद्युक्तत्वादभिसारिका च । कान्ताभिसरणोद्युक्ता स्मरार्ता साभिसारिकेति लक्षणात् ।

जिघ्रत्याननमिन्दुकान्तिरधरं बिम्बप्रभा चुम्बति
स्प्रष्टुं वाञ्छति चारुपद्ममुकुलच्छायाविशेषः स्तनौ ।
लक्ष्मीः कोकनदस्य खेलति करावालम्ब्य किञ्चादरात्
एतस्याः सुदृशः करोति पदयोः सेवां प्रवालद्युतिः ॥ १६ ॥

काञ्चिन्नवयौवनशालिनीं सुन्दरीं विलोक्य जाताभिलाषः कामी नर्मसचिवं ब्रूते । जिघ्रतीति । इन्दुकान्तिः एतस्याः पुरोवर्तिन्याः सुदृशः सुनयनायाः । इदं पदद्वयं प्रतिवाक्यं सम्बध्यते । आननं जिघ्रति आघ्राणं करोति मुखमुपैतीत्यर्थः । इह सर्वत्र अचेतने चेतनधर्ममुपपाद्यते । घ्राधातोः पाघ्रेत्यादिना जिघ्रादेशः । बिम्बप्रभा बिम्बफलश्रीः अधरं चुम्बति प्राप्नोति

इत्यर्थः। यथा लोके मातादिर्बन्धुजनः मुखाघ्राणादिकं करोति तद्वदिति ध्वनिः। तथा चारुपद्ममुकुलयोः छायाविशेषः कान्तिविशेषः। छाया त्वमातपे कान्ताविति विश्वः। स्तनौ स्प्रष्टुं वाञ्छति स्तनाश्रयणं विधातुमुपक्रमत इत्यर्थः यथा कश्चित्कामी स्तनस्पर्शं कर्तुमिच्छति तद्वदिति ध्वनिः। स्प्रष्टुं वाञ्छतीति स्तनस्थौल्यस्य भावित्वप्रकटनद्वारा यौवनप्रादुर्भावस्य अभिनवत्वं व्यज्यते। तथा कोकनदस्य रक्तपद्मस्य। भवेत्कोकनदं रक्तपद्मे रक्तोत्पलेऽपि चेति रत्नमाला। लक्ष्मीः शोभा। शोभासम्पत्तिपद्मासु लक्ष्मीः श्रीरिव कथ्यते इत्यभिधानात्। करौ हस्तौ आलम्ब्य खेलति क्रीड़ति हस्तौ प्राप्य विजृम्भत इत्यर्थः। यथा क्रीड़नपरा सखीहस्तावालम्ब्य भ्रमणादिरूपखेलनं करोति तद्वदिति ध्वनिः। किञ्च प्रवालद्युतिः नवपल्लवकान्तिः विद्रुमकान्तिर्वा। वीणादण्डे प्रवालोऽस्त्री विद्रुमे नवपल्लवे इति रत्नमाला। आदरात्पदयोः सेवां करोति चरणौ भजतीत्यर्थः। यथा काचित्परिचारिका स्वामिन्याश्चरणसेवां करोति तद्वदिति ध्वनिः। अत्र चन्द्राद्युपमानधर्माणां वदनाद्युपमेयसम्बन्धाऽसम्भवात्तत्सदृशकान्तिरित्यादिसादृश्याक्षेपादसम्भवद्वस्तुसम्बन्धनिबन्धना पदार्थवृत्तिर्निदर्शना। सम्भवतोऽसंभवतः सम्बन्धाद्यत्र वस्तुनोरुभयोः। बिम्बप्रतिबिम्बकृतिरुच्यत एषा निदर्शना प्रोक्ता। इति लक्षणात्। तथा मुखादीनामाघ्राणादियोग्यत्वेन जिघ्रतीत्यादिवाच्यार्थलक्ष्यार्थयोरभेदाध्यवसायमाश्रित्य मुख्यार्थपुरस्कारेण वाक्यार्थरूपविशेषणानां प्रस्तुताऽप्रस्तुत साधारण्यलाभात् कान्त्यादिशब्दस्त्रीत्वबलाद्विशेषशब्द पुंस्त्वबलाच्च अप्रस्तुत बान्धवस्त्रीव्यवहारप्रतीतेः समासोक्तिः। तदुक्तम्। विशेषणानां तौल्येन यत्र प्रस्तुतवर्त्तिनाम्। अप्रस्तुत-

स्य गम्यत्वं सा समासोक्तिरिष्यते। इति सा च प्रागुक्तनिदर्शनाल-ङ्कारेण जिघ्रतीत्यादौ वाच्यलक्ष्ययोर्भेदेऽप्यभेदकल्पनरूपया अ-तिशयोक्त्या निर्वाहं गमितेति त्रयाणा मलङ्काराणाम्। अङ्गा-ङ्गिभावेन सङ्करः। भेदेनावस्थितिर्येषां सा संसृष्टिरुदाहृता। क्षीरनीरवदेतेषां सम्भेदसङ्करस्त्रिधा। इति लक्षणात्। अङ्गाङ्गि-भावेन संशयास्पदत्वेन एकवाचकानुप्रवेशेन च सङ्करस्त्रिधेति त्रिधाशब्दार्थः। मुखाघ्राणादीनां चेतनधर्माणामचेतनेषु समा-रोपात् समाधिर्नाम गुणः। समाधिरन्यधर्मस्य यदन्यत्राधि-रोपणमिति लक्षणात्। नायिका परकीया मुग्धा च। उद-यद्यौवनामुग्धा लज्जाविजितमन्मथा इति लक्षणात्। अयोग-विप्रलम्भशृङ्गारः। तस्य नायिकादिरूपयौवनादिप्रशंसनेन यून-स्तद्दर्शनान्नायिकाविषयस्पृहालक्षणरत्याख्यस्थायिभावरूपेण स्फुरि-तत्वमात्रं व्यज्यते इति रससत्ता नाम प्रथमा रसोक्तिः। रसोक्तिभेदाश्चमत्कारचन्द्रिकायां प्रतिपादिताः। सत्तास्फुर-त्तासम्बोधनिष्पत्तिः पुष्टिसङ्करौ। ह्रासाभासौ शमश्चैवं निरु-क्ता हि रसोक्तय इति। रससत्तालक्षणं तत्रैवोक्तम्। निजाश्रये समुन्मेषे विभावगुणसम्पदा। रसस्य सत्ता रत्यादिस्थायि-भावाकृतिश्च सेति। विभावगुणसम्पत्त्या रसस्य स्थायिकादि-रूपे स्वाश्रये यदुन्मेषमात्रं सा सत्तैव रससत्ता। केवलरत्या-दिस्थायिभावः स्वादुतां नीतश्चेद्रस इत्युच्यते। तथा चोक्तं शृङ्गारतिलके। विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः। आनीयमानः स्वादुत्वं स्थायिभावो रसः स्मृत इति। तत्र रसो-त्पत्तिकारणं विभाव इत्युच्यते। तदुक्तम्। विभावः कथ्यते तत्र रसोत्पादनकारणम्। आलम्बनोद्दीपनात्मा स द्विधा परिकी-

र्तित इति । तत्राऽऽलम्बनविभावो नायिकादिः । तथा चो-क्तं साहित्यचिन्तामणौ । आलम्बनन्तु रत्यादि विषयो नायिकादिकः इति । उद्दीपनविभावस्तु आलम्बनगुणादिरूपेण चतुर्विधः । तदुक्तं शृङ्गारतिलके । आलम्बनगुणश्चैव तच्चेष्टातदलङ्कृतिः । तटस्था चेति विज्ञेयाश्चतुर्धोद्दीपनक्रमाः । आलम्बगुणो रूपयौवनादिः प्रकीर्तितः । तच्चेष्टा यौवनोद्भूतहावभावादिका मता । नूपुराङ्गदहारादितदलङ्करणं मतम् । मलयानिलचन्द्राद्यास्तटस्थाः परिकीर्त्तिताः । एवं कार्यभूतेन येन रत्यादिरनुभाव्यते सोऽनुभावः । स च आङ्गिकादिभेदेन त्रिविधः । तदुक्तं साहित्यचिन्तामणौ । अनुभावो भवेत् सोऽयं भावो येनानुभाव्यते । आङ्गिको वाचिकश्चापि सात्विकश्चेत्यपि त्रिधेति । आङ्गिकाः कटाक्षविक्षेपादयः । वाचिकाः गीतनर्मोक्तिगुणकीर्त्तनादयः । सात्विकाः स्तम्भादयः । ते चाष्टौ । स्तम्भप्रलयरोमाञ्चाः स्वेदो वैवर्ण्यवेपथू । अश्रुवैस्वर्य्यमित्यष्टौ सात्विकाः परिकीर्तिताः । रससहकारिणो निर्वेदादयो भावा व्यभिचारिण इत्युच्यते । ते च त्रयस्त्रिंशत् । तथा चाहुः । निर्वेदग्लानिशङ्काख्या इत्यादिना त्रयस्त्रिंशदमी भावा रसस्य सहकारिण इति एते निर्वेदादयः सञ्चारिण इति व्यवह्रियन्ते । तथा चोक्तम् । विशेषादाभिमुख्येन चरन्ति व्यभिचारिणः । त एवान्यत्र सञ्चारात् सञ्चारिण इति स्मृता इति । स्थायिभावस्तु । रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयन्तथा । जुगुप्सा विस्मयशमाः स्थायिभावाः प्रकीर्तिताः । नवानां भावानां नव प्रसिद्धा रसाश्च । शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः । बीभत्साद्भुतशान्ताश्च रसाः पूर्वैरुदाहृता इति । यथाक्रमं रत्यादिस्थायिकाः

एतेषां लक्षणानि तु तत्र तत्र केषाञ्चित्प्रदर्शयिष्यमाणत्वाद्वि-
स्तर भयान्न लिख्यन्ते ॥ १६ ॥

दूति ! त्वया कृतमहो निखिलं मदुक्तं
न त्वादृशी परहितप्रवणास्ति लोके।
श्रान्तासि हन्त ! मृदुलाङ्गि ! गता मदर्थं
सिध्यन्ति कुत्र सुकृतानि विना श्रमेण ॥ १७ ॥

प्रणयकलहनिरस्तत्वेन कुपितमात्मनो वल्लभमनुनेतुं स्वनियोगाद्गतां रूपविभ्रमादिभिस्तं वशीकृत्य स्वहितमेव साधयित्वा प्रत्यागतां त्वदुक्तं सर्वं कृतमिति मृषैव भाषमाणां लक्ष्यमाणरतिश्रमां दूतीमन्तर्निगूढरोषा विदग्धा नायिका निन्दास्तुतिं कुर्वती प्राह। दूतीति। हे दूति ! मदुक्तं निखिलं सर्वं कृतम्। इदं कुरु इदं मा कुरु इति मया यद्यदुक्तं तत्तदेवाचरितमित्यर्थः। अहो! उक्तार्थे लेशोऽप्यन्यथा न कृत इति स्तुतिपक्षे विस्मयः। अन्यदुक्तमन्यत्कृतमिति निन्दापक्षे विस्मयः। त्वादृशी त्वत्समाना दूती परहितप्रवणा परोपकाररता लोके नास्ति। परोपकारमेव स्फुटीकरोति श्रान्तेति। हे मृदुलाङ्गि ! कोमलगात्रि! सौकुमार्यशालित्वेन कायक्लेशमसहमानया त्वया परोपकारार्थं सोऽपि सोढः कियत्ते सौजन्य मिति स्तुतिपक्षे भावः। अन्यत्र मार्दवशालिनि त्वदङ्गे स्फुटं लक्ष्यमाणानि रतिश्रमलक्षणानि सम्बरीतुं अशक्यानि इत्यर्थः। मदर्थं गता श्रान्तासि। यातायातादिभिः श्रमं प्राप्तासीति स्तुतिपक्षे भावः। अन्यत्र तु मत्कार्यसाधनव्याजेन गतासि सम्भोगेन श्रमं प्राप्तासीत्याशयः। हन्तेति विषादे विषादोऽत्र मृषाभूतः उक्तार्थस-

मर्थनायार्थान्तरं गमयति। सुकृतानि पुण्यानि श्रमेण विना कुत्र सिध्यन्ति। न कुत्रापीत्यर्थः। अतस्तव श्रममविचार्य्य परहिताचरणे प्रवृत्तिरुचितैवेति भावः। अत्र वाच्यया स्तुत्या मदुक्तं त्वया किमपि न कृतं त्वं न केवलं स्वार्थपरा किन्तु विश्वस्य प्रियं प्रति प्रेषितवत्यै मह्यमेव द्रोहङ्कृतवत्यसि अग्रहणीयान्यनिमित्तोऽयमुत्कटः श्रमस्तव मद्वल्लभोपभोगोपमर्दमुद्घाटयति धिक् त्वां विश्वस्तजनद्रोहिणीमिति निन्दा व्यज्यते। अत एव व्याजस्तुतिरलङ्कारः। निन्दया वाच्यया यत्र स्तुतिरेवाव गम्यते। स्तुत्या वा गम्यते निन्दा व्याजस्तुति रसौ मता॥ इति लक्षणात्। मृदुलाङ्गीति विशेषणस्य साभिप्रायत्वात्परिकरालङ्कारः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः। परिकरस्य व्याजस्तुत्यङ्गत्वादुभयोः सङ्करः। अर्थान्तरन्यासस्य तु ताभ्यां सह संसृष्टिः। नायिका स्वीया प्रगल्भा च। प्रवृद्धयौवना पूर्णपञ्चेषुविजितत्रपा। रतौ यतते स्वैरं प्रौढाच्छन्नोक्तिशालिनीति लक्षणात्। गूढविप्रियकारित्वान्नायकः शठः। दूती त्वभिसारिका। परकार्यसाधनव्याजेन अभिसरणात्। उक्तं च रतिरहस्ये। दूतिमिषेणान्यस्या नायकमेत्यात्मरूपगुणभावान्। व्याजान्निवेद्य घटयेत् अर्थं स्वं साभिसारिका दूतीति॥ १७॥

न वरीभरीति कवरीभरे स्रजो
न चरीकरीति मृगनाभिचित्रकम्।
विजरीहरीति न पुरेव मत्पुरो
विवरीवरीति च विप्रियं प्रिया॥ १८॥

नायकः सखीभि रीर्ष्यामानं गमितायां नायिकायां अनालपन्त्यां तस्याः सखीमाह । नेति, प्रिया स्रजः माला कबरी केशपाशः सैव भरीभारः । भरो विषयभारयोरिति रत्नमाला । तस्मिन् कबरीभरे न बरीभरीति पुनःपुनर्न बिभर्त्ति अपरितापनिवृत्तिपर्य्यन्तं घटितान्यपि वेष्टनानि विघटयति भूयो भूयः सुष्ठु न धारयतीत्यर्थः । अत्र बरीभरीति इत्यादिधातुरूपचतुष्टयस्यार्थः पौनःपुन्यार्थवत्त्वेन भृशार्थवत्त्वेन वा योज्यः । तथा मृगनाभिचित्रकं कस्तूरीतिलकम् । मृगनाभिर्मृगमदः कस्तूरी च । तमालपत्रतिलकचित्रकाणि विशेषकम् इति च अमरः । न चरीकरीति पुनःपुनर्न करोति न्यूनातिरिक्तप्रमार्जनपूर्वकं नवं न विरचयतीत्यर्थः । पुरेव प्रागिव मत्परा ममायतः । पूरणगुणेति सूत्रे पूर्व्वोत्तरसाहचर्य्येण क्तदव्ययस्यैव ग्रहणमित्यभ्युपगमादिह न षष्ठीसमासप्रतिषेधः । तथा च प्रयोगः । वापी कापि स्फुरति गगणे तत्तटे सूक्ष्मपद्मेति । न विजरीहरीति सहचरीभिः सह पुनःपुनर्न क्रीड़ति । त्रिप्रियं न विवरीवरीति भृशं न विवृणोति च । एतादृशकोपनिमित्तं किमप्रियं मया चरितमित्युक्ता सती प्रतिवचनं न प्रयच्छतीत्यर्थः। कोपनिमित्तप्रश्नेऽपि न व्याहरतीति भावः । क्रमादिह भृङ् भरणे क्ञङ् करणे हृङ् हरणे वृङ् वरणे इत्येतेभ्यश्चतुर्भ्यो धातोरेकाच इत्यादिना यथासम्भवं पौनपुन्ये भृशार्थे वा यङि तस्य यङोचितेति लुक् प्रत्ययलक्षणेन सन्यङोरिति द्वित्वम् । ऋतश्चेत्यभासस्य रीगागमः। चर्करितञ्चेति यङ्लुङन्तस्यादिप्रभृतिषु,परिगणितत्वाच्छपो लुक्। यङो वेति पाक्षिक ईडागमः। अत्र एकस्य प्रियेति कर्तुरनेकक्रियान्वयात् कारकदीपका-

लङ्कारः। स्वभावोक्तिवृत्त्यनुप्रासौ स्फुटावेव। यङ्लुगन्तप्रयोगात् सौशब्द्याख्यो गुणः। ईर्ष्यामानविप्रलम्भशृङ्गारः। ईर्ष्यामानलक्षणं साहित्यचिन्तामणौ। ईर्ष्यामानः स यः कोपः प्रिये ज्ञातान्यसङ्गमे। अभाषणमुपालम्भो भर्त्सनन्ताड़नन्तथा॥ वैमुख्यमस्रु चामर्ष इत्याद्यैः सोऽनुभाव्यते। तज्ज्ञानं श्रवणात् दृष्टे रनुमानात् त्रिधा भवेत्॥ श्रवणं दूतिकादिभ्यो दृष्टिः साक्षाद्विलोकनम्। अनुमा स्वप्नभोगाङ्कगोत्रप्रस्खलनादिभिरिति। अत्र स्वप्नो नाम निद्रायामुद्भूतोऽन्यनायिकागोचरः संलापः। नायिका खण्डिता। ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायितेति। निःश्वासकम्पखेदाद्यैः खण्डितेत्यभिधीयते। सा च मध्या धीरा च। मध्या धीरा प्रियं माने न पश्यति न भाषत इति मध्यालक्षणन्तु। संलक्ष्ययौवना मध्या तुल्यलज्जामनोभवा। प्रियप्रीत्साहिता धत्ते केलिविस्रम्भकौशलमिति। धीरत्वादिनाऽवान्तरभेदशालित्वं मानिन्योरेव मध्याप्रगल्भयोः, तदुक्तं साहित्यचिन्तामणौ। मध्याप्रगल्भयोर्मानमिति त्रैविध्यमिष्यते। धीरात्वधीरा च पुनर्धीराऽधीरेति च क्रमात्। नायकस्तु माननिदानस्य सखीवचनस्य सत्यत्वे दृष्टः असत्यत्वे निरपराधत्वादनुकूल एव। मञ्जुभाषिणीवृत्तम्। सजसा जगौ भवति मञ्जुभाषिणीति लक्षणात्।

> गूढ़ालिङ्गनगण्डचुम्बनकुचस्पर्शादिलीलाचितं
> सर्वं विस्मृतमेव विस्तृतवतो बाले! खलेभ्यो भयात्।
> संलापस्त्वधुना सुदुर्घटतमस्तत्रापि नातिव्यथा
> यत्त्वद्दर्शनमप्यभूदसुलभं तेनैव दूये भृशम् ॥१८॥

आदौ रूपरेखाविलासादिभिः शनैः शनैः प्रलोभ्य क्रमादालिङ्गनादिष्वानुकूल्यं नीत्वा कञ्चित्कालं गूढं रमितां ततः परेङ्गितज्ञेषु धूर्तेषु लक्षणान्यवेक्ष्य स्वैरिणीत्वानुमानपरेषु सत्सु परित्यक्ताभिसरणादिप्रसङ्गां कदाचिद्दर्शनसम्भाषण-परां तेषु सम्भाषणमप्यसहमानेषु सत्सु मुखप्रदर्शनमात्र-परां तस्यापि तैरन्तराये क्रियमाणे चिरमनवलोकितां दैवात् कदाचिद्विजनप्रदेशे दृष्टिपथमागतां नायिकां कामी खेदाकुलः प्राह। गूढेति हे बाले! बाल्यप्रयुक्तान्मौग्ध्यादेव ते इदमनर्थ-मूलं भयं प्रवृद्धमिति भावः। विस्तृतवतः विस्तारं प्राप्तवत इति यावत् खलेभ्यः रन्ध्रान्वेषणपरेभ्यो दुर्जनेभ्यो भयात्। भीत्रार्थानां भयहेतुरिति अपादानत्वात् खलेभ्य इति पञ्चमी भयशब्दाद्धेतौ पञ्चमी। अस्य हेतोरुत्तरत्रापि सम्बन्धः। सर्वं गूढमन्यैरविदितं स्पृष्टकादिरूपमालिङ्गनं तथा गण्डयो-श्चुम्बनं कुचयोः स्पर्शः तेषां द्वन्द्वसमासः ते आदयो यस्य तत्त-थोक्तं लीलायितं विलासः तद्रूपं चेष्टितमित्यर्थः। लीला-विलास इति धातोः कण्ड्वादित्वात् यकि भावे क्तः। कण्ड्वादिरा-कृतिगणः। तथा च दृश्यते प्रयोगः यद्विद्वद्भवनेषु भोजनृपते-स्तत्त्यागलीलायितम् इति। यस्योद्यद्भुजदण्डचण्डिमच-लत्कोदण्डलीलायितम् इति च। यद्वा गूढेत्यादि लीला-यितमित्येकं पदम्। गूढालिङ्गनगण्डचुम्बनकुचस्पर्शाः आदयो यासां चेष्टानां तास्तथोक्ताः तासां लीलायितं विलास-वदाचरणम्। भावपरीक्षार्थं केनचिन्मिषेण क्रियमाणत्वाद्वि-लासायमानत्वमित्यर्थः। लीलाशब्दादाचारक्यङ् त्वाद्भावे क्तः। न लोकेति निषेधस्य क्त्वोगलक्षणषष्ठीविषयत्वादिह शेष-

षष्ठ्या समासः। चतुराः कामिनः केनचिद्व्याजेनोपक्रान्तैरालिङ्गनादिभिः कामिनीपरीक्षां कुर्वन्तीति कामशास्त्रे प्रदर्शितम्। सुहृदि शिशौ वा जनयति तामेवोद्दिश्य चुम्बनाश्लेषम्। उत्सङ्गमङ्गमस्या बहुस्पर्शोद्दाललालनव्याजात् इति। दर्शितेङ्गितायां संश्लेषणं स्पृष्टकादिरूपम् आयुञ्ज्यात्। सललितमञ्ज विहारैस्तज्जघनं संस्पृशेदन्यः। अवतार्य कामपि रुजं वार्त्ताव्याजेन तत्र नीतायाः। आलम्ब्य पाणिमस्याः शिरसि दृशोः स्वस्य सपुलकं दद्यात्। अनुरागपेशलञ्च ब्रूयादुभयार्थमीदृशं वाक्यम्। शमय मम दुःखपीड़ां कलयानमितं त्वमेवास्याः। सुतनु! मदनादरोऽयं युक्तः किन्त्वद्गुणस्य किन्तु फलम्॥ इत्यौषधादिपेषणविधिषु व्यापारयेदेनाम्। सनखस्पर्शं कुर्य्याद्दानादानञ्च पूगकुसुमादेः। करजरदनपदलाञ्छितमस्यै पर्णादिकं दद्यात्। अथ सन्निधाय रहसि प्रौढ़ाश्लेषादिसुखरसं विन्द्यात्। इति स्पृष्टकादिलक्षणमपि तत्रैवोक्तम्। यद्योषितः सम्मुखमागताया अन्यापदेशाद्व्रजतो नरस्य। गात्रेण गात्रं घटते रतज्ञा आलिङ्गनं स्पृष्टकमेतदाहुः॥ यद्गृह्णती किञ्चन कुञ्चिताक्षं स्थिरोपविष्टं पुरुषं स्तनाभ्याम्। नितम्बिनी विध्यति तञ्च गाढ़ं गृह्णात्यसौ विद्धकमुच्यते तत्॥ यत्रोत्सवादौ तिमिरे घने वा यदिच्छतोऽस्याश्चिरमङ्गसङ्गम्। तत् स्पृष्टकं तत्पुनरेव कुड्ये निपीड़नात्पीड़नसंज्ञिकं स्यात्॥ भावप्रबोधार्थमजातरत्योश्चतुर्विधोक्ता परिरम्भलीलेति। विस्मृतमेव तद्वार्त्तामपि विहाय बहुकालो गत इति अर्थः। चिरोज्झिते दुर्घटे तस्मिन्नैराश्यस्योत्पन्नत्वात् असंस्मरन् भृशं न शोचामीति भावः। अधुना सम्प्रति संलापो मिथःसम्भाष-

णम्। संलापो भाषणं मिथ इत्यमरः। अतिदुर्घटा अतः भवेत् तत्र तत्र मूढं स्थितेषु निर्भयमेकत्र मेलनस्यालाभादिति भावः। तत्रापि संलापाभावेऽपि अतिव्यथा अतिदुःखं नास्ति। दुःसहविरहतापविस्मरणहेतोस्त्वन्मुखदर्शनमात्रस्य कदाचिदपि सद्भावादिति भावः। किन्तु, त्वद्दर्शनमप्यसुलभं दुर्लभमभूदिति। यत् भावपरीक्षाकौतुकेषु खलेष्वपश्यत्स्विव पश्यत्सु सम्मुखदर्शनस्य मदृष्टिपथे वर्त्तनस्य त्वया प्रायेण परित्यक्तत्वादिति भावः। तेनैव त्वद्दर्शनस्य दौर्लभ्येनैव भृशमत्यन्तं दूये परितापं प्राप्नोमि। दूङ् परिताप इति धातोः कर्त्तरि लट्। चिरपरिचितानामालिङ्गनादीनामात्यन्तिकनिवृत्तावपि दर्शनसंलापयोः सम्भवतो विरहव्यथां किञ्चित् सोढ़वानस्मि। ततः संलापे निवृत्तेऽपि दर्शनमात्रस्य सम्भवात् कथञ्चित् धैर्य्यमालम्ब्य स्थितवानस्मि। सम्प्रति दर्शनस्यालाभे सति प्रतिबन्धलाभादतिमात्रं विजृम्भमाणेन विरहतापेन दुःसहामार्त्तिमनुभवामीति निष्कृष्टार्थः। अत्रालिङ्गनादि-लीलायुतस्य चिरोज्झितत्वे प्रस्तुते तत्प्रत्यायनार्थं तत्कार्य्यभूतस्य विस्मरणस्योपवर्णनात् अप्रस्तुतप्रशंसालङ्कारः। अप्रस्तुतस्य कथनात् प्रस्तुतं यत्र गम्यते। अप्रस्तुतप्रशंसेयं सारोप्यादि-नियन्त्रिते इति लक्षणात्। आदिशब्देन कार्य्यकारणभावादेः संग्रहः। तथाचाहुः। कार्य्ये निमित्ते सामान्ये विशेषे प्रस्तुते सति। तदन्यस्य वचस्तुल्ये तुल्यतेवेति पञ्चधा॥ सा च विस्मरणसम्बन्धेऽपि तत्सम्बन्धकल्पनरूपया अतिशयोक्त्यानुप्राणितेति सङ्करः। तथा, यथा कारणभूतानां प्रशस्तानां कामोपचाराणामात्यन्तिक-

निवृत्तौ सत्यामपि यथारोपकार्य्यानुदयात् विशेषोक्तिर्नामाऽलङ्कारः । कार्य्याजनि विशेषोक्तिः सति पुष्कलकारणे इति लक्षणात् । तद्दर्शनालाभरूपा समग्रकारणा अधिकपरितापकार्य्यस्योत्पत्तिवर्णनात् विभावनाभेदः । विभावना विनापि स्यात् कारणं कार्य्यजन्म चेत् । हेतूनामसमग्रत्वे कार्य्योत्पत्तिश्च रुा मतेति । सा च विशेषोक्त्यनुगृहीतेति उभयोः सङ्करः अनयोः प्रागुक्तालङ्कारस्य च संसृष्टिः । नायकमनसो दौर्बल्यस्य प्रतीयमानत्वात् दैन्यं नाम सञ्चारिभावः । निरोजस्त्वन्तु मनसो दैन्यमित्यभिधीयते । मनःसन्तापदारिद्रयश्चिन्तौत्सुक्यादिभि र्भवेदिति विरहविप्रलम्भः शृङ्गारः । नायिका परकीया ॥१९॥

> या, चन्द्रस्य कलङ्किनो जनयति स्मेराननेन त्रपाम्
> वाचा मन्दिरकीरसुन्दरगिरो या सर्वदा निन्दति ।
> निःश्वासेन तिरस्करोति कमलामोदान्वितान् याऽनिलान्
> सा तैरेव रहस्त्वया विरहिता काञ्चिद्दशां नीयते ॥ २० ॥

कस्मिंश्चिदवसरे कार्य्यव्यासङ्गात् प्राणवल्लभे विलम्बमाने विरहवेदनामसहमानया नायिकया प्रेषिता दूती नायकमाह येति । या, स्मेरं स्मितयुक्तं यदाननं तेन कलङ्किनः चन्द्रस्य कुत्सितलाञ्छनयुक्तस्य चन्द्रस्येति, मन्दहासशालिना, निष्कलङ्केन मुखेनेति, त्रपाहेतूक्तिः । त्रपां लज्जां जनयति सकलङ्कचन्द्रं अतिशयेनाभिभवतीत्यर्थः । सा नायिका त्वया विरहिता त्वया वियुक्ता सती वाचा गिरा मन्दिरे क्रीड़ार्थं गृहे संवर्द्धितशुकः । कीरशुकौ समावित्यमरः ।

मन्दिरग्रहणं शिक्षालभ्योक्तिः । चातुर्य्यातिशयशालित्वसूचनार्थं सर्वदा समक्षवर्त्तित्वेन निखिलदूषणवचनश्रोतृत्वस्य द्योतनार्थञ्च । तस्य सुन्दरगिरश्चारुवाचः सर्वदा सर्वस्मिन् काले अस्य पदस्य पूर्व्वोत्तरवाक्ययोरपि सम्बन्धः । निन्दति गर्हति । तद्वन्मधुरं भाषत इत्यर्थः । या निःश्वासेन कमलानामामोदः मनोहरपरिमलः । विमर्द्दोत्थे परिमले गन्धे जनमनोहरे, आमोदः सोऽतिनिर्हारीत्यमरः । तेनान्वितान् युक्तान् अनिलान् वायून् तिरस्करोति परिभवति, कमलगन्धिभिः कोमलैः शिशिरैश्च निःश्वासैर्युक्ता भवतीत्यर्थः । सा नायिका त्वया विरहिता त्वया वियुक्ता सती तैः स्वपरिभूतैरेव चन्द्रकेलिशुककमलवनानिलै रहः विजनप्रदेशे, अन्यत्र निःशङ्कं बाधितं प्रवृत्तेरसम्भवादिति भावः । काञ्चित् वक्तुमशक्यामित्यर्थः । दशां मूर्च्छादिरूपावस्थामित्यर्थः । नीयते प्रापवती क्रियते । अत्र प्रथमपादे कलङ्किन इति निष्कृष्टहेतूपन्यासेन उपमानाच्चन्द्रादुपमेयस्य नायिकावदनस्याधिक्यवर्णनाद्व्यतिरेकालङ्कारः । व्यतिरेको विशेषश्चेत् उपमानोपमेययोरिति लक्षणात् । द्वितीयतृतीययोस्तु उपमालङ्कारः । निन्दति तिरस्करोतीति पदद्वयस्य सादृश्यप्रतिपादकत्वात् । स्पर्द्धतिजयतिद्विष्टीत्यादीनामपि सादृश्यप्रतिपादकेषु दण्डिना परिगणितत्वात् । त्रपां जनयतीत्यत्र कश्चित् कलङ्कितं साकूतास्मितेन लज्जां प्रापयति, तद्वदिति वाचा निन्दतीत्यत्र कण्ठत एव निन्दां करोतीति निःश्वासेन तिरस्करोतीत्यत्र हेलया निन्दां करोतीति प्रतीयते । इह सर्वत्र प्रकृतार्थस्य प्रतीयमानार्थाभेदाध्यवसाय-

माश्रित्य नायिकायाः प्रथमापराधं स्वयमुद्भाव्यत इत्य-
भेदातिशयोक्तिः। तन्महिम्ना त्वद्विरहिता सती तैरेव
दुरवस्थां नीयत इत्यनेन त्वया कृतमपराधं मनसि निधाय
चन्द्रादयः सर्वे सम्भूय तवासान्निध्यवशात् एकाकिनीं तां वैर-
निर्य्यातनार्थमिव पीड़यन्तीति उत्प्रेक्षालङ्कारो व्यज्यते,
तेन च तत्कृतताड़नस्यातिमात्रत्वं गम्यते। ततः नायिका
स्वपरिभूतैरेव परिभूयते, तदुपेक्षणन्तु तवानुचितमिति ध्वन्यते,
किञ्च सर्वदा स्मेरमुखी मञ्जुभाषिणी सुकुमारी सुरभिशिशि-
रनिःश्वासशालिनी नायिका सम्प्रति दुरवस्थामनुभवतीत्य-
नेन स्मितादिकं सर्वं परित्यज्य साश्रुमुखी दैन्योक्तिपरा
दीर्घोष्ण निःश्वसिता सती वर्त्तत इति दीप्यते, रह इत्यनेन
लज्जया: परेभ्यः स्वावस्थामनाविष्कृत्य अन्तरेऽवताम्यतीति
गम्यते। ततः सर्वथा शीघ्रमागत्य नायिकामिमां जीवयेति
प्राधान्येन ध्वन्यते। चन्द्रमन्दानिलकीरकोकिलालापादि-
विभावैस्तीव्रनिःश्वासाद्यनुभावैरश्रुवैस्वर्य्यादिसात्विकैर्व्रीड़ादै-
न्यादिसञ्चारिभावैश्च परितोषं गमितो नायिकाश्रयो विरह-
विप्रलम्भः शृङ्गार: प्रतीयते। एवं व्यङ्गसमृद्धिसद्भावात् गाम्भीर्य्यं
नामा गुणः। ध्वनिमत्ता तु गाम्भीर्य्यमिति लक्षणात्। नायिका
स्वीया मध्या विरहोत्कण्ठिता च, अनेककार्य्यव्यासङ्गाद् यस्य
नागच्छति प्रियः। नामतः सैव दुःखार्त्ता विरहोत्कण्ठिता
मता। अस्यास्तनुत्वं कम्पश्च पाण्डिमा वाष्पनिर्गमाः। निर्वे-
दश्वासदैन्याद्या अनुभावा भवन्त्यमीति लक्षणात्॥ २१॥

तन्वी सा यदि गायति श्रुतिकटु वीणाध्वनिर्जायते
यद्याविष्कुरुते स्मितानि मलिनैवालक्ष्यते चन्द्रिका।

आस्ते म्लानमिवोत्पलं नवमपि स्याच्चेत् पुरो नेत्रयोः-
तस्याः श्रीरवलोक्यते यदि तड़िद्दल्ली विवर्णैव सा ॥२१॥

काञ्चिद्विलासिनीं विलोक्य जाताभिलाषः कामी तदीयगुणान् नर्म्मसचिवस्याग्रे स्तौति तन्वीति । सा मया दृष्टा तन्वी तन्वङ्गी गायति गानं करोति यदि, वीणाध्वनिः श्रुत्योः श्रोत्रयोः कटुः अप्रियः श्रुतिकटुः कर्णकठोरः । कटुस्तिक्तरसे च्चाररसे ना तद्वति त्रिषु, सुगन्धौ मत्सरे कार्य्याप्रियतीच्णेष्वपि त्रिषु, कटुः स्त्री कटु रोहिण्यां दूषणेऽपि नपुंसकमिति नानार्थ-रत्नमालायाम् । जायते भवति । गायन्त्यास्तस्याः कण्ठस्वरे श्रूयमाणे वीणाध्वनिः श्राव्यतां जहातीत्यर्थः। वीणास्वनमप्यति-शेते, तदीयकण्ठस्वर इति भावः । सा तन्वी स्मितानि मन्द-हासान् आविष्कुरुते यदि प्रकटयति चेत्, चन्द्रिकापि मलिन वालच्यते तत्सन्निधौ सा मन्दस्फूर्त्तिः सती दृश्यत इत्यर्थः । वैशद्येन ततोऽपि तदीयस्मितश्रीरुत्कृष्टेति भावः । उत्पलं कुवलयं नवं नूतनमपि अम्लानमपीति यावत् तस्यास्तन्व्या नेत्रयोः पुरः स्याच्चेत् तदीयनयनद्वन्द्वस्य पुरोवर्त्ति भवेद्यदि, म्लानमिवास्ते तिष्ठति। तथा स्वल्पीभूतशोभत्वेन लक्ष्यत इत्यर्थः । तदक्षियुगलं श्रिया नवोत्पलं निराकृत्य वर्त्तत इति भावः । तस्याः श्री देहकान्तिरवलोक्यते यदि सा वर्ण-प्रकर्षशालित्वेन प्रसिद्धा तड़िद्दल्ली विद्युल्लता विवर्णैव तद्दर्णा नयनसुभगो न भवतीत्यर्थः । तत्कान्तिः विद्युत्कान्तिश्च महदन्तरमस्तीति भावः। अत्र वीणाध्वनिपारुष्यादिरूपाऽ-प्रस्तुतकार्य्येन प्रशंसनीयनायिकागानमाधुर्य्यातिशयरूपप्रस्तुत-कारणप्रतीतिरप्रस्तुतप्रशंसालङ्कारः। तल्लक्षणन्तूक्तम् । सा

च वीणाध्वनिप्रभृतीनां श्रुतिकटुत्वादसम्बन्धेऽपि तत्सम्बन्धाभिधानरूपया अतिशयोक्त्यानुप्राणितेति तयोः सङ्करः। नायिका परकीया, अयोग विप्रलम्भः शृङ्गारः। नायिकारूपेणालम्बनविभावेन आलम्बनगुणरूपेण उद्दीपनविभावेन च लब्धप्रथमोन्मेषा नायिकाश्रया रतिर्व्यज्यत इति। रससत्त्वा नाम प्रथमा रसोक्तिः। लक्षणन्तूक्तम् ॥ २१ ॥

सत्यं तत् यदवोचथा मम महान् रागस्त्वदीयादिति
त्वं प्राप्तोऽसि विभात एव सदनं मां द्रष्टुकामो यतः।
रागं किन्तु बिभर्षि नाथ ! हृदये काश्मीरपत्रोदितम्
नेत्रे जागरजं ललाटफलके लाक्षारसापादितम् ॥ २२ ॥

अन्यकान्ताविश्मनि रात्रिं नीत्वा प्रभातसमये समायान्तं परिदृश्यमानसम्भोगचिह्नं वल्लभं काचिन्नायिका स्तुतिव्याजेन मर्मोद्घाटं कुर्वती प्राह सत्यमिति। त्वदीयात् त्वत्सम्बन्धिनो मद्विषयादनुरागात् मम रागः मत्सम्बन्धित्वविषयोऽनुरागः महानधिक इति यद्वचः अवोचथा अवादीः, ब्रुञोऽङ्त्वादात्मनेपदं प्रकृतेर्वैचिरादेशः। अस्यतिवक्त्यादिना च्लेरङ् वच अमि ङुमागमः, तद्वचः सत्यं तथ्यं, यतः यस्मात् कारणात् त्वं विभाते प्रभाते प्रातरेव ननु त्वं कालमतिक्रम्य विलम्बनासहिष्णुत्वादिति स्तुतिपरो भावः। निशां नीत्वैवायातः न तु पूर्व्वम् अन्यकान्तापरतन्त्रत्वादिति निन्दापरो भावः। मां द्रष्टुं कामोऽभिलाषो यस्य, तथोक्तः सन् सदनं गृहं प्राप्तोऽसि। मामदृष्ट्वा चिरमन्यत्र वर्त्तितुं न शक्नोसीति स्तुतिपरो भावः। प्रतारणपरतया दर्शनमात्रं कर्त्तुमागतोऽसीति निन्दा-

परो भावः। त्वदीयरागस्य माहात्म्यं न कार्य्यानुमेयम्। किन्तु प्रत्यक्षसिद्धमपीत्याह। रागमिति। किञ्च हे नाथ! हृदये वक्षसि हृदयञ्चित्तवक्षसोरिति नानार्थे रत्नमालायाम्। काश्मीराख्य-देशे भवं काश्मीरं कुङ्कुमम् "अथ कङ्कुमं काश्मीरजन्माग्निशि-खमित्यमरः। काश्मीरञ्च गुड़ं रक्तं तथा कालेयकञ्च तत्। काश्मीरजन्माग्निशिखं चारु लोहितचन्दनमिति प्रताप-मार्त्तण्डः। तस्य पत्राणि तन्मयाः पत्राकारा रेखाविशेषाः पत्रावाली पत्रलता पत्रभङ्गश्च पत्रक इत्यमरकोषे। तस्य उदितमुत्पन्नं प्रेयसीकुचकुम्भपरिरम्भपिशुनमिति भावः। रागं रक्तिमानमनुरागञ्च विभर्षि, तथा नेत्रे चक्षुषि जाग-रजं जागराज्जातं कृत्स्ननिशायामपि कामोपचारसूचक-मिति भावः। रागं विभर्षि, तथा, ललाटं फलकमिवेत्युप-मितसमासः। तस्मिन् लाक्षारसान् आलक्तकद्रवेण आपा-दितं सम्पादितं दयिताचरणप्रणिपातशंसनमिति भावः। रागं विभर्षि एवम् अन्तर्बहिश्च रागस्फूर्त्तेः स्फुटत्वादधुना त्वदीयवचसोऽनृतत्वशङ्का निवृत्तेति भावः। इह त्वं सत्यवा-दीति स्तुत्या त्वद्वचनं सर्व्वमनृतमेव वाङ्मात्रेण मय्यनुरागो दर्शितः। निशावसाने गृहं प्रत्यागमनेन सम्भोगचिह्नैश्च वनितान्तरविषयस्तवानुरागः स्फुटीक्रियते। वञ्चकाग्रेसर-स्त्व मत स्त्वयि विश्वासो न विधेय इति निन्दा व्यज्यते। अत्र प्रथमवाक्यं प्रतिपादत्रयवाक्यार्थस्य हेतुत्वादनेकवाक्यार्थहे-तुकं काव्यलिङ्गमलङ्कारः। तच्चैकस्मिन्नंशे शुद्धम्, अंशा-न्तरे तु रागशब्दगतश्लेषमूलातिशयोक्तिः सङ्कीर्णा स्तुत्या-निन्दा प्रतीयत इति व्याजस्तुतिश्च, सा चोक्तवाक्यलिङ्ग-

सापेक्षेति तयोरङ्गाङ्गि भावेन सङ्करः । लक्षणानि तूक्तानि । प्रथमपादोक्तार्थस्य प्रपञ्चेन समर्थनाद्विस्तरार्थो गुणः । समर्थनात् प्रपञ्चोक्तिरुक्तस्यार्थस्य विस्तर इति लक्षणात् । ईर्ष्यामानविप्रलम्भः शृङ्गारः । नायिका खण्डिता, नोत्वानयत्र निशां प्रातरागते प्राणवल्लभे, अनया सम्भोगचिह्नैस्तु कुपिता खण्डिता मतेति लक्षणात् । सा च मध्याधीरा धीराच, धीराधीरा तु सोत्प्रासवक्रोक्त्या स्यात् प्रियागसीति लक्षणात् । नायको धृष्टः अपराधे, स्फुटेऽपि निर्भीकत्वात् ॥ २२ ॥

एतस्मिन् सहसा वसन्तसमये प्राणेश ! देशान्तरं
गन्तुं त्वं यतसे तथापि न भयं तापात् प्रपद्येऽधुना ।
यस्मात् कैरवसारसौरभमुषा साकं सरोवायुना
चान्द्री दिक्षु विजृम्भते रजनीषु स्वच्छा मयूखच्छटा ॥२३॥

काचिन्नायिका वसन्तकाले देशान्तरे गन्तुं प्रयत्नवन्तं कान्तं तत्प्रवासमन्तरङ्गेनानङ्गीकुर्व्वाणाप्यङ्गीकुर्व्वाणेवाह । एतस्मिन्निति । हे प्राणेश ! मत्प्राणेश्वर ! त्वयि गते त्वदधीनास्ते विनिर्गमिष्यन्तीत्यभिप्रायगर्भमिदं सम्बोधनपदम् । एतस्मिन् विविधकुसुमाविर्भावमधुकरनिकुरम्बकमदकलकलकण्ठकूजितादिमदनोद्दीपनसामग्रीशालितया विरहिणीनां संवर्त्तकालवद्वर्त्तमान इत्यर्थः । वसन्तसमये त्वं सहसा अतर्कितं यथा तथा, अतर्कितन्तु सहसेत्यमरः । देशान्तरमन्यदेशं मयूरव्यंसकादित्वात् समासः । गन्तुं यतसे यत्नं करोषि । तथापि इत्थमभिमतेऽर्थे चिकीर्षिते, किमधुनेदानीं तापात् विरहतापात् न प्रपद्ये न प्राप्नोमि सम्प्रति विरहतापश्चिरं बाधिष्यत इति । न विभेमीत्यर्थः । काला-

कालान्तरे तु भयं सम्प्राप्स्यामीत्याशयः। ननु कुतोऽधुना तापभयं तव न विद्यते तत्राह, यस्मादिति। यस्मात् कारणात् रजनिषु रात्रिषु रञ्जराज इति धातो रङ्नादेशः। बहुदरात्रलोपः कदाकार पङ्क्तिः, न इति पाणिकेऽङ्प्रत्यये रजनीति ङेर्षान्तः प्रसिद्धः। अत्र अङन्तत्वाद्ध्रस्वान्तत्वम्। तथा भोजप्रयोगः। रजनिचरमभागे वारसीमन्तिनीनामिति। कैरवानां कुमुदानां यत् सारसौरभम्, उत्कृष्टसौरभ्यं सारो बले स्थिरांशे च न्याय्ये क्लीबे वरे त्रिष्वित्यमरः। तं मुष्णात्यपहरतीति तथोक्तः। तेन विकचकुमुदामोद भाजेत्यर्थः। सरोवायुना साकं सरःसम्बन्धिना समीरेण सह, साकं सत्रा समं सहेत्यमरः। वायोः शैत्यं सौरभहेतुं कुमुदवनोपरि प्रसरणञ्च गमयितुं सरोग्रहणम्। चान्द्री चन्द्रसम्बन्धिनी स्वच्छा नीहारनिवृत्त्या निर्म्मलमयूखानाम् किरणानां च्छटा संहतिः। रिङ्खाली स्त्री तति च्छटेत्यभिधानात्। दिक्षु विजृम्भते उत्कटतया भासते अयत्नसिद्धशैत्योपचार सामग्रीशालिनी कालेऽस्मिन् उत्पन्नस्तापप्रकर्षम् नोपयास्यति ततस्तस्मादधुना न बिभेमीति वाच्याभिप्रायः। कालान्तरे प्रवासश्चेत् तापश्चिरं महतीमार्त्तिमेव सम्पादयेत्। न तु क्षिप्रं स्वनिवृत्तिहेतुप्राणविरहासहकारिविरहात्। तस्मात्तदानीं तापाशङ्कितव्यम्। इदानीं चक्रानिलदवानलयोरिव मलयानिलचन्द्रातपयो र्योगे तापो भृशायमानः सहसैव प्राणान्निर्गमय्य आत्यन्तिकीं निवृत्तिं भजत इत्याशुविनाशिनस्तस्मात् न भेतव्यमिति गूढाभिप्रायः॥ अत्र तापान्न बिभेमीति सहेतुकमुपपादनात् मदभिमतो यात्राकालः।

गन्तुमिच्छसि चेदिदानीमेव गम्यतामिति विधिर्व्यज्यते। स च अनिष्टतया आभासोऽभवत् मज्जीवितमिष्टं चेदधुना न गम्यतामिति निषेधमाक्षिपति। अतोऽत्राऽनिष्टविध्याभासरूप आक्षेपालङ्कारः। आक्षेपोऽन्यविधौ व्यक्ते निषेधे च तिरोहिते इति लक्षणात्। स विधिरपि प्रतीयमानतया ध्वनिरूपः। वसन्तसमयप्रसक्त प्राणवल्लभ प्रयाणसन्नाहरूप कारणसामग्री सद्भावेऽपि तापभयरूपकार्यस्य अनुदयाद्विशेषोक्तिर्नामालङ्कारः। कारणेन विना कार्यस्योत्पत्तिः स्याद्विभावना। तत्सामग्र्यामनुत्पत्ति र्विशेषोक्तिर्निगद्यत इति लक्षणात् ।तापभयाऽनुदयं प्रत्युत्तरवाक्यार्थस्य हेतुत्वेनोपन्यासात् काव्यलिङ्गम् तच्च विशेषोक्तेरङ्गमिति द्वयोः सङ्करः। भाविप्रवासविप्रलम्भ शृङ्गारः। नायिका प्रवत्स्यद्भर्तृका॥ २३॥

चक्षुर्जाड्यमुपैतु मानिनि! मुखं सन्दर्शय श्रोत्रयोः
पीयूषस्रुति सौख्यमस्तु मधुरां वाचं प्रिये! व्याहर।
तापः शाम्यतु मे प्रसादशिशिरां दृष्टिं शनैः पातय
त्यक्त्वा दीर्घमभूतपूर्वमचिराद्रोषं सखीदोषजम्॥२४॥

नायकः सखीभिरुत्पादितेन प्रथीयसा मानेन मुखप्रदर्शन मेवाकुर्वतीं कृच्छ्रेण किञ्चिन्मुखप्रदर्शने क्रियमाणेऽपि मौनमालम्बमानां चिरात्तत्त्यागेऽपि निष्ठुर मेवाभाषमाणां निष्ठुरभाषणावसानेऽपि रोषकषायितामेव दृष्टिमुपरिष्टात्पातयन्तीं नायिकां प्रियोक्तिभिः प्रसादयति। चक्षुरिति। हे मानिनि! मे मम चक्षुषी जाड्यं जडत्वं स्तब्धत्वं त्वन्मुखदर्शनालाभजनितचिन्तापारवश्यप्रयुक्तं रूपग्रहणाक्षमत्वमित्यर्थः। जडस्तब्धे बुद्धिहीने ग्रहग्रस्ते च वाच्यवदिति रत्नमाला। अपैतु

अपगच्छतु । मुखं सन्दर्श्य त्वन्मुखानवलोकनजन्यस्य नयन जाड्यस्य त्वन्मुखावलोकनैकपरिहार्यत्वादिति भावः हे प्रिये ! मे श्रोत्रयोः पीयूषस्रुतिः अमृतस्रावः । तेन यत् सौख्यं सुखं तत् तादृशमित्यर्थः । स्वार्थे ष्यञ् । अस्तु तद्भवतु । मधुरां प्रियाम् । स्वादुप्रियौ तु मधुरावित्यमरः । वाचं व्याहर उदीरय । मौनं परुषभाषणानि विहाय सरलया वाचा कर्णयोः सुखं जनयेत्यर्थः । मे तापः कामजः सन्तापः शाम्यतु शान्तिमुपयातु । दीर्घं चिरस्थायिनं पूर्वं भूतो भूतपूर्वः भूतपूर्वे चरट् इति निर्देशात्पूर्वशब्दस्य परनिपातः भूतपूर्वो न भवतीत्यभूतपूर्वः कदापि प्रागेवं नजात मित्यर्थः । अत्युत्कट मितिभावः । सखीनां दोषात् मृषावादरूपात् जातः तम् । न तु सत्यभूतमदीयदोषप्रभवमितिभावः । रोषं कोपं अचि- रात् शीघ्रं त्यक्त्वा । शिशिरां शीतलां दृष्टिं शनैः पातय मन्दं प्रसारय । मयीतिशेषः । सखीना मनृतोक्तिभिः निरपराधे मय्येतादृशो दीर्घरोषः कर्त्तुं नोचितः तस्मादुग्रदृष्टिमपहाय शिशिरया सौम्यदृष्ट्या तापं निवर्त्तयेत्यर्थः सर्वत्र प्रार्थनायां लोट् । इह सर्वत्र पूर्वोत्तरवाक्यार्थयो र्हेतुहेतुमद्भावापन्न- त्वाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । पीयूषस्रुतिसौख्यमित्यत्र पीयूषस्रुतिसाध्यसौख्यस्य वाग्व्यापारसाध्यत्वायोगात् तत्- सदृशं सौख्यमिति सादृश्याक्षेपान्निदर्शनालङ्कारभेदः । दीर्घ मित्यादि रोषविशेषणत्रयस्य तत्परिग्रहानौचित्याभिप्रायगर्भत्वा- त्परिकरः । प्रसादशिशिरामिति दृष्टिविशेषणस्यापि ताप- निवर्त्तक सामर्थ्याभिप्राय गर्भत्वात्परिकरः । एतेषा मन्योन्य- नैरपेक्ष्यात्संसृष्टिः द्वितीय परिकरस्य उत्तरार्द्धगत काव्यलिङ्ग

प्रत्यङ्गत्वात्तयोरुभयोः सङ्करः मानविप्रलम्भशृङ्गारः । वाक्कृतं सङ्केच्छारूपं नर्म । नायिका खण्डिता । नायकः सखीवचनस्य सत्यत्वे धृष्टः असत्यत्वेऽनुकूलः । सामाख्यः प्रथमो मानापनयनोपायः । सामाद्युपायस्वरूपं साहित्यचिन्तामणौ । साम्ना भेदेन दानेन नत्युपेक्षारसान्तरैः । मानापनयनं तासां उपायैः षड्भिराचरेत् । तत्र चाटुवचः साम भेद स्तत्सख्युपार्जनम् । दानं व्याजेन भूषादेः पतनं पदयोर्नतिः । धैर्य्यालम्ब उपेक्षा स्यात् रसोत्पादो रसान्तरमिति ॥२४॥

मानम्लानमना मनागपि नतं नालोकते वल्लभम्
निर्याते दयिते निरन्तरमियं बाला परंतप्यते ।
आनीते रमणे बलात्परिजनै र्मौनं समालम्बते
धत्ते कण्ठगतानसून् प्रियतमे निर्गन्तुकामे पुनः ॥ २५ ॥

प्रवृद्धप्रणयकलहे प्रिये दृष्टे मानं, अदृष्टे तापं च भजमानां नायिकामालोक्य मनसि खिद्यमाना काचित्तस्याः सखी तदवस्थामन्यस्यै कथयति । मानेति । माने म्लानं क्षीणहर्षं मनो यस्याः सा तथोक्ता इयं पुरोवर्त्तिनी बाला अत्र बालाशब्देन किञ्चिदूनषोड़शवर्षा मध्या विवक्षिता । न तु तदूनमुग्धा । तस्याः स्तोकनिष्फलमानत्वादीदृगनल्पसफलमान शालिनीत्वायोगात् । मुग्धायाः स्तोक निष्फलमान शालिनीत्वं साहितचिन्तामणौ स्फुटीकृतम् । मुग्धोद्यद्यौवना मूढा लज्जाविजितमन्मथा । सखीनां परतन्त्रात्र निष्फलस्तोकमानभागिति आषोड़शाब्दा बालेति व्यवहारस्तु कामशास्त्रे प्रदर्शितः । बाला स्यात् षोड़शाब्दा तदुपरि तरुणी त्रिंशती याव-

दूदं प्रौढा स्यात् पञ्च पञ्चाशदवधि परतो वृद्धतामेति नारीति। नतं प्रणतं नत्याख्यमानापनयनोपायानुष्ठानतत्परमित्यर्थः। वल्लभं प्रियं मनाक् ईषदपि। किञ्चिन्मनागल्पमपीत्यमरः। नावलोकते न पश्यति। अनुनयस्यादौ मन्यूद्रेकहेतुत्वादित्यर्थः। दयिते प्रिये निर्याते निर्गते। उपेक्षामन्तरेण नेयमुपायान्तरेण साध्येति निश्चयादुपेक्ष्य गते सतीति यावत्। निर्गतमन्तरं अवधिर्यस्मिन् कर्म्मणि तद्यथा भवति तथा निरन्तरं सन्ततमित्यर्थः। अन्तरं विवरान्तर्द्धि भेदेष्ववधिरन्ध्रयोः। इति रत्नमाला। परं अत्यन्तं तप्यते परितापं व्रजति। अवधीरितोऽपि स्वयमेवागत्यानुनयन् प्रियः किमिति मयोपेक्षित इति पश्चात्तापं भजत इति भावः। रमणे कान्ते परिजनैर्नायिकासम्बन्धिभिः यद्वा सखीदास्यादिभिः यद्वा पीठमर्दादिभिः नायकस्यैव नर्मसचिवैः पीठमर्दादीनां स्वरूपं साहित्यचिन्तामणौ। तत्सहायाः पीठमर्दविटचेटविदूषकाः। पीठमर्दः समीपस्थः कार्यालोचनकोविदः। कामशास्त्ररहस्याना मुपदेष्टा विटः स्मृतः। चेटः सन्धाननिपुणो हास्यकारी विदूषक इति। बलादानीते बलात्कारेण आगमिते सति मौनमालम्बते आश्रयते। वियोगतापप्रकर्षेण मन्दवेगतामापन्नस्यापि कोपस्य सापराधप्रियमुखदर्शनवशात् किञ्चित् पुनरुल्लसितत्वादिति भावः। प्रियतमे पुनः निर्गन्तुं कामोऽभिलाषो यस्य तस्मिन्। भाषिताऽपि न भाषते किमत्र वृथावस्थानेनेति सासूयं निर्यातुमुद्युक्ते सतीत्यर्थः। कण्ठगतानसून् प्राणान् धत्ते। पुनर्वियोगप्रसक्त्या विजृम्भमाणेन दुःसहतापेन कण्ठगतप्राणा भवतीत्यर्थः। जीवितसंशये प्रसक्तेऽपि मानं न मुञ्च-

त्यहो कियदस्या मौर्ख्यमिति भावः। नायकनिर्गमसन्नाहमात्रेण नायिकायाः प्राणसङ्कटप्रसक्तिरूपवर्णनादुपेक्षारूपपञ्चमोपाय प्रयुक्तं मानस्याऽल्पावशिष्टत्वं व्यज्यते। स्वभावोक्तिः। कर्तृ-कारकस्य क्रमिकाऽनेक क्रियान्वयित्वात् कारकदीपकालङ्कारः। लक्षणं तूक्तम्। मानविप्रलम्भशृङ्गारः। नायिका मध्या-धीरा कलहान्तरिता च कोपात् कान्तम्परानुद्य पश्चात्तापसम-न्विता। कलहान्तरिता नाम सूरिभिः परिकीर्तिता। नायको धृष्टः ॥ २५ ॥

> कर्णारुन्तुदमेव कोकिलरुतं तस्याः श्रुते भाषिते
> चन्द्रे लोकरुचिस्तदाननरुचेः प्रागेव संदर्शनात्।
> चक्षुर्मीलन मेव तन्नयनयो रग्रे मृगीणाम्बरम्
> हैमी वल्लरपि तावदेव ललिता यावन्न सा लक्ष्यते ॥ २६ ॥

इति श्रीकालिदासकृत पुष्पबाणविलासः समाप्तः।

निस्तुलरूपविभ्रमादिशालिनीं काञ्चित्तरुणीं विलोक्य तरलचित्ततां प्राप्तः कामी नर्मसचिवस्याग्रे तां मनस्तारल्यका-रिणीं वर्णयति। कर्णेति। तस्या मया विलोकितायाः सुन्दर्या भाषिते वचसि श्रुते सति। कोकिलरुतं कर्णयोररुन्तुदमेव अतिपीड़ाकरमेव भवतीति शेषः। तदुक्तिश्रवणानन्तरं कोकि-लकूजितमत्यन्तं नीरसं बाधत इत्यर्थः। न तु मनागपि प्रागिव श्रुतिसुभगतां प्रतिपद्यत इति एवकाराभिप्रायः, एतेन कण्ठ-स्वरस्य सर्वातिशायिमाधुर्य्यशालित्वं द्योत्यते। अरुन्तुदस्तु मर्म्मस्पृक् इत्यमरः। तथा चन्द्रे लोकरुचिः जनानां अभिलाषः। रुचिस्तु किरणे कान्ता वभिषङ्गाभिलाषयोरित्यमरः। चन्द्रलो-

करुचिः इति पाठान्तरं तत्पक्षे चन्द्रस्य आलोको दर्शनं आलोको दर्शनोद्योता वित्यमरः। तस्मिन् रुचिः अभिलाषः इत्यर्थः। तदाननरुचेः तन्मुखकान्तेः संदर्शनात् प्राक् पूर्व्वमेव वर्त्तत इति शेषः। तदाननरुचिसंदर्शनानन्तरन्तु निवर्त्तते। निःसारत्वबुद्धिरुदयतीति एवकाराभिप्रायः एतेन तदाननस्य चन्द्रादप्यधिकलोकोत्तरसौन्दर्यशालित्वं द्योत्यते। तथा तन्नयनयोः तन्नेत्रयोः अग्रे मृगीणां कुरङ्गाङ्गनानां चक्षुर्मीलनं निजनेत्राणां पक्ष्मभिः प्रच्छादनमेव वरम्। मनाक् प्रियम्। तत्कालप्रसज्यमानलाघवपरिहारेण प्राक् सिद्धगौरवपरित्राणसम्भवादिति भावः। चक्षूंषि सम्यक् निमील्य तद्विक्रमप्रकाशने तु पूर्वगौरवहानि र्न स्यात्। उत्कृष्टसन्निधौ रम्याणामप्यरम्यत्वे नाभासमानत्वादित्येवकाराभिप्रायः, एतेन तन्नयनयोर्निखिलहरिणाङ्गनानयनदुर्लभविस्तारतारल्यादिगुणसम्पन्नत्वं द्योत्यते। सा सुन्दरी यावन्नालक्ष्यते न दृष्टिविषयीक्रियते तावदेव हैमी बल्ली हिरण्मयी लतापि किमुतान्यदितिभावे अपि शब्दः। ललिता मनोरमा। गुणाद्भुतवस्त्वनुभवस्य अन्यथाऽरुचेर्मूलत्वादित्येवकाराभिप्रायः। एतेन कनकप्रभातिशायिनी तदङ्गद्युतिरिति द्योत्यते। अत्र कोकिलरुतकर्णारुन्तुदभावादिरूपाप्रस्तुतकार्यप्रतिपादनेन नायिका वाङ्माधुर्य प्रकर्षादिरूप प्रस्तुतकारणप्रतीतिरप्रस्तुत प्रशंसाभेदः। उपमानभूत कोकिलरुताद्यपेक्षया नायिका वागादिरूपाणां उपमेयानां आधिक्यस्य वर्णनाद्व्यतिरेकश्च तौ च कोकिलरुतादीनां कर्णारुन्तुदत्वाद्यसम्बन्धेऽपि तत् सम्बन्धकल्पनरूपया अतिशयोक्त्या अनुगृहीताविति तस्यास्तयोश्च अङ्गाङ्गिभावेन

सङ्करः । व्यतिरेकाऽप्रस्तुत प्रशंसयोस्तु एक मेव वाक्यार्थ माश्रित्य सहोत्थानादेकवाचानुप्रवेशसङ्करः । अयोगविप्रलम्भशृङ्गारः नायिका परकीया ।

इति बि, ए, उपाधि-धारिणा श्रीजीवानन्द-विद्या-सागर भट्टाचार्य्येण प्रयत्नतः सङ्कलिता पण्डितवर श्रीवेङ्कट सार्वभौम विरचिता पुष्पबाण विलास व्याख्या समाप्ता ।